"कनकालङ्कृतां दत्वा तत्र गामवतारयेत् ।
सामगाय च सा देया ब्राह्मणाय विशाम्पते" ॥

इति वचनमेकदेशोत्कीर्त्तनपरमिति,—"सचेलकण्ठां काञ्चनशृङ्गीं वृषप्रजां कृष्णचुरां कांस्योपदोहां विधाय दद्यात्"–इति मुन्यन्तरोक्तमन्यदुपलक्षयति,—इति वाचस्पतिमिश्रैर्निरूपितम् ।

ननु होमादेवाग्निप्राप्तेरग्निग्रहणमग्नावेवेत्येवमर्थमेव किमिति न स्यात्? इति चेन्नैष दोषः । कस्मात्? अग्निशब्दत्वात् । अग्नाविति वचनं खल्वग्नौ होमं शक्नोति वदितुं न पुनरनग्निं निवर्त्तयितुं प्रभवति । तस्मादशब्दोऽयमर्थः—अग्नावेव इति । ननु होमादेवाग्नेः प्राप्तत्वादन्याय्यं पुनर्व्वचनम्? उच्यते । काममन्याय्यं भवतु, न तु शक्नोत्यन्यद्वदितुम् । सकृदुच्चरितेऽप्यस्य यावानर्थः, शतकृत्वोऽप्युच्चरिते तावानेव प्रतीयते । अपिच । साधुः खल्वयमाचार्य्यः कथमस्य वचनमन्याय्यं भवतु । साधोर्व्वचनं बहुशोऽप्युच्यमानं न्याय्यमेव, असाधोस्तु सकृदप्यन्याय्यम् । पुनर्व्वचनस्य प्रयोजनं किञ्चिद्वक्तव्यम्? एवन्तर्हि आदरः पुनर्व्वचनस्य प्रयोजनं भविष्यति । आदरेणाग्नौ होमः कर्त्तव्यः—इति । आदरार्थमपि पुनर्व्वचनमाचार्य्याणां बहुलमुपलभ्यते । परिसंख्यानार्थमेव कुतो न भवति पुनर्व्वचनमिति चेन्न, अन्यथैवोपपत्तेः । न खल्विष्यते परिसंख्या सम्भवन्त्यामपि गतौ । सा हि दोषत्रयदुष्टा भवति । तथा चोक्तम् ।

"श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् ।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका" ।

इति । परिसंख्यायाञ्च श्रुतिरत्यन्तमुत्सृष्टा भवति । यावच्च भवा-

नग्निपदस्याखार्थकल्पनया जलादिकं व्यावर्त्तयितुमुत्सहते, ताव-द्वाक्यान्तरेण जलाद्याधारताऽन्वीयते—इत्युपरिष्टादुपजायमानोऽपि परिसंख्यावाक्यार्थः कथमिवान्वितमपि जलादिकं परिसञ्चचीत। वाक्यान्तरप्राप्तस्य परिसंख्याने वाक्यान्तरस्य सामर्थ्यविरहात्। वाक्यभेदश्चैवमापद्येत! कस्मात्? इति होमाः कर्त्तव्याः, ते चाग्नावेव न जलादावित्यर्थभेदात्। एकं खल्विदं वाक्यम्—'अग्नावग्निर्ध-न्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदितिहोमाः'—इति। तस्मा-दग्नाविति न नियमार्थं वचनम्। अन्यथा—

"वैश्वानरं समभ्यर्च्य माज्यपुष्पाचतैरथ"।

इति।

"अनाहितावसथ्याग्निरादायान्नं घृतप्लुतम्।
शाकलेन विधानेन जुहुयाल्लौकिकेऽनले"।

इति चैवमादिस्मृतौ शाकलहोमेऽप्यग्नेरुपादानात्तचापि जल-चित्याधारता न स्यात्। न स्यादेवेति चेन्नाभ्युपगमात्। अभ्युप-गम्यते खल्वेतद्भवता—यदुत शाकलकल्पे जलचित्याधारतेति।

अपिच। गौतमः खल्वाचार्य्यः—"भार्य्यादिरग्निर्दायादिर्व्वा, तस्मिन् गृह्याणि, देवपितृमनुष्ययज्ञाः"—इत्यभिधाय, 'अग्नावग्निः'—इत्यादिवचनं रचयाञ्चकार। स खल्वयं होमो गृह्य एवाग्नौ मा भूदित्येवमर्थं पुनरग्नावित्याह। तत्कथमनर्थकमग्निवचनं?—येन परि-सञ्चचीत। अग्नावित्यवचने खल्वयं होमः प्रकृते गृह्य एवाग्नौ स्यात्। होमात् खल्वग्निर्गम्यते, प्रकृतश्च गृह्योऽग्निरिति स एव गम्येत। तस्मादग्नाविति जात्या द्रव्यमग्निमात्रं लक्षयित्वा तत्र होमो-

विधीयते,—लौकिकेऽप्यग्नौ होतव्यमित्येवमर्थं, नान्येषामाधाराणां निवृत्त्यर्थम् । न खल्वग्निपदं व्यक्तिवचनं, येनाग्नेयीन्यायात् सन्निहित एवाग्निरर्थः स्यात् । यदि पुनरग्निपदस्यापि प्रकृत एवाग्निरर्थ इत्युच्यते । अस्तु तर्हि गौतमीयानां गृह्याग्निसाध्यएवायं होमः, स एव तु गोभिलीयस्यानाहिताग्नेः कात्यायनेन विहितः,—इति गोभिलीयस्यानाहिताग्नेराधारविशेषानुपदेशान्न तेषामप्यग्नावेव होमः कर्त्तव्य इति शक्यते वक्तुम् । होममात्रं खल्वनाहिताग्नेर्विधीयते, न तु गृह्याग्निसाध्यत्वविशिष्टमपि । गौरवादसम्भवाच्च । न खल्वनाहितगृह्याग्नेस्तस्मिन्नग्नौ होमः सम्भवति । तस्माद्गौतमवचनेऽग्निपदं निरग्नेरप्याधारान्तरं निवर्त्तयतीत्यसङ्गतं वचनम् ॥ ४ ॥ * ॥

## अथ बलीन् हरेत् बाह्यतोवाऽन्तर्व्वा सुभूमिं कृत्वा ॥ ५ ॥

अथेति पूर्व्वप्रकृतार्थम् । अथ पूर्व्वप्रकृतेनैवान्नेन होमावशिष्टेनेत्येतत् । कात्यायनोऽपि स्मरति ।

"स्वशाखाविधिना कृत्वा तच्छेषेण बलिं हरेत्" ।

इति । अपचारे च शेषस्यान्यदप्युपादाय बलीन् हरेत् । कस्मात् ?—

"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहिणामिव शालयः" ॥

इति कर्म्मप्रदीपस्मरणात् । 'गुणलोपे च मुख्यस्य'—इति च न्यायात् । मुख्यः खल्वयं बलिर्भवति प्रधानत्वात् । न खल्वयं

बलिर्द्रव्यार्थः, किन्तर्हि ?—पुरुषार्थ इत्युपरिष्टादुपपादयिष्यामः। पुरुषार्थञ्च कर्म्म प्रयोजयति द्रव्यम्। अर्थकर्म्मणि च द्रव्यविधिरयं भवति,—शेषेण बलीन् हरेत्—शेषेण बलिहरणमभिनिर्व्वर्त्तयेदिति।

ननु साक्षादत्र शेषः प्रतिपाद्यते? उच्यते। सत्यं शेषः प्रतिपाद्यते। तत् खल्विदं प्रतिपादनमर्थकर्म्मणि क्रियते—इति शेषनाशेऽपि नैतत् परिलुप्यते। कर्म्मचोदना हि द्रव्यमन्तरेणानुपपन्ना द्रव्यमाक्षिपति, विशेषशास्त्रन्तु नियामकम्, तच्चासम्भवात् यदा न प्रवर्त्तेत, तदा मा भून्नियमः, तथापि सामान्याक्षेपस्य वारयितुमशक्यत्वात् अस्ति प्रतिनिधिः,—इति खल्वभियुक्ताः कथयन्ति। प्रतिपत्तिरूपकर्म्माङ्ग एव प्रतिपाद्याभावे तन्निवृत्तिमनुमन्यन्ते। विहितस्य द्रव्यस्य खल्वपचारे प्रतिनिधिरुपादेय इति च षष्ठाध्याये सिद्धान्तितम्।

"चरितार्था श्रुतिः कार्य्या यस्मादप्यनुकल्पशः"।

इति च स्मरणम्। अस्ति चात्र साक्षादपि द्रव्यान्तरविधायकं किञ्चिद्वचनम्। तच्चोदाहरिष्यामः। तस्माच्छेषापचारेऽन्यदुपादाय बलयोहर्त्तव्या इति सिद्धम्।

कुत्र बलयोहर्त्तव्याः? तदुच्यते। 'बाह्यतो' बहिर्व्वा, प्रकृतत्वादग्न्यगारस्य। तथा चाग्न्यगारान्निष्क्रम्य तस्मिंस्तस्मिन् प्रदेशे तन्तं बलिं हरेत्, योयोबलिर्यस्मिन् यस्मिन् प्रदेशे समाम्नातः। 'अन्तर्' मध्ये वा अग्न्यगारस्य—एकस्मिन्नेव प्रदेशे बलीन् हरेत् सर्व्वान्। 'सुभूमिं' शोभनां भूमिं 'कृत्वा', यथासम्भवं सम्मार्ज्जनोपलेपनादिभिरिति वाक्यशेषः ॥ ५ ॥ * ॥

**सकृदपोनिनीय चतुर्धा बलिं निदध्यात् सकृदन्ततः परिषिञ्चेत् ॥ ६ ॥**

सकृदेकवारम्। अप उदकं निनीय निषिच्य चतुर्द्धा चतुर्षु स्थानेषु बलिं बलिचतुष्टयं निदध्यात्। अत्र च—"समाचारात् प्राप्तं बलिचतुष्टयमात्रं सकृद्गृहीत्वा चतुर्षु स्थानेषु निदध्यात्, बलिमित्येकवचनात्, चतुर्धेतिवचनाच्च",—इति वत्सुसोमभट्टनारायणौ। तच्चेदं, बलिचतुष्टयार्थं सकृदेव सेकः—इत्यस्मिन् पक्षे ज्ञेयम्। यत्र पुनरग्निमसूत्रानुसारादेकैकबल्यर्थमकैकः परिषेकः पुरस्ताच्चोपरिष्टाच्च क्रियते, न तत्रैतद्भवति। न खलु शक्यते द्वितीयादिबल्यन्नं दक्षहस्ते कुर्व्वता तेनैव हस्तेन परिषेक्तुम। दक्षिणः करः खलु कर्म्मपारगोऽङ्गानुज्ञावित्यवोचाम। परिशिष्टप्रकाशोऽप्येवमेवाह।

तदेवं बलिचतुष्टय दत्वा, सकृदेकवारं अन्तत उपरिष्टात् परिषिञ्चेद्वलीन्। प्राक्संस्थाः खल्विमे बलयो भवन्ति। कस्मात्? "प्राञ्चि उदञ्चि वा कर्म्माण्यनुतिष्ठेरन्"—इति श्रवणात्। एकत्र निधानपक्षे तथोपदेशाच्च। तच्चोदाहरिष्यामः। बलिपरिमाणमाह कर्म्मप्रदीपः।

"न चावराद्ध्र्याबलयो भवन्ति
महामार्ज्जारश्रवणप्रमाणात्।
एकत्र चेत् कृत्स्ना भवन्ति
इतरेतरसंसक्ताश्च" ॥

इति। तच्च परिमाणमङ्गुष्ठपर्व्वमात्रमिति भट्टभाष्यम् ॥६॥ * ॥

## एकैकं वाऽनुनिधानमुभयतः परिषिञ्चेत् ॥ ७ ॥

'एकैकम्', एकमेकं वा बलिम्, 'अनुनिधानं',—निधानमनुलक्ष्मीकृत्यानुनिधानं, प्रत्येकं निहितान् बलीन् प्रत्येकमेवोभयतः पुरस्ताच्चोपरिष्टाच्च परिषिञ्चेत् ॥ ७ । * ॥

## स यत् प्रथमं निदधाति स पार्थिवो बलिर्भवत्यथ यत् द्वितीयꣳ स वायव्यो यत् तृतीयꣳ स वैश्वदेवो-यच्चतुर्थꣳ स प्राजापत्यः ॥ ८ ॥

स यजमानः प्रथमं यन्निदधाति इति यदर्थोनिधानक्रिया-विशेषणम् । व्यत्ययाद्वा नपुंसकत्वम् । स यत् यं बलिं प्रथमं निदधाति, स पार्थिवः,—पृथिवी देवताऽस्येति देवतार्थे तद्धित-विधानात् पृथिवीदेवताको भवतीत्यर्थः । अनेनैव सूत्रशेषो-व्याख्यातः । "अनिरुक्तं हि प्राजापत्यम्",—इति वचनात् मानसः प्राजापत्यबलिः । तदत्र मन्त्रानुपदेशात् कात्यायनोक्तोबलिमन्त्र आदरणीयः । तद्यथा ।

"अमुष्मै नम इत्येवं बलिदानं विधीयते ।
बलिदानप्रदानार्थं नमस्कारः कृतोयतः" ॥

इति । अत्र, इतिः पदद्वयकीर्त्तनार्थं । एवमिति क्रमार्थम् । भट्टनारायणकुल्लूकभट्टशूलपाणिवाचस्पतिमिश्ररघुनन्दनप्रभृतिभिरपि नमस्कारान्त एव बलिमन्त्रोऽभिहितः । परिशिष्टप्रकाशे तु,—'नमो-ब्रह्मणे' इति दर्शनात् नमः पृथिव्यै इति बलिहरणमन्त्रोलिखितः । अमुष्मै नम इति च तत्सूत्रविरोधादेव न क्रमपरं किन्तु पद-

द्वयकीर्त्तनाभिप्रायम्—इति चाभिहितम्। नैतदेवम्। शाब्दक्रमविरोधात्। इत्येवं बलिदानम्—इति शाब्दः क्रमः खल्विह कात्यायनेन समाम्नातः। पाठक्रमाच्च बलवत्तरः स इष्यते। तथाचोक्तम्। "श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात्"—इति। "क्रमकोयोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च"—इति च।

कात्यायनवचनं पदद्वयकीर्त्तनाभिप्रायं न क्रमपरमिति चेन्न विनिगमनाऽभावात्। कात्यायनवचन पदद्वयकीर्त्तनाभिप्रायमाचार्य्यसूत्रं वेत्यत्र न काचिद्विनिगमनोपलभ्यते। परमार्थतस्तु—इत्येवमितिवचनात् कात्यायनवचनं क्रमपरं भवितुमर्हति। किमाचार्य्यः कात्यायनस्य नोपजीव्यः? क एवमाह—नोपजीव्य इति, सत्यमुपजीव्य एवाचार्य्यः कात्यायनस्य, किमतो भविष्यति? यद्येवमेतदतोभविष्यति;—कात्यायनवचनमुपजीव्यबाधभयादेव न क्रमपरम्—इति। नैवम्। नित्यबलावाचार्य्येण मन्त्रानुपदेशात्। इत्येवं बलिदानम्—इति ब्रुवाणः कात्यायन आचार्य्यस्यैवाभिप्रायं प्रकाशयाञ्चकारेति श्लिष्यते। स खलु,—गोभिलोक्तानामस्पष्टानां विधिं प्रदीपवत् सम्यग्दर्शयिष्ये—इति प्रतिज्ञातवानित्यवोचाम। वृत्तिकारकल्पः खलु कात्यायन आचार्य्यस्य। मुन्यन्तरैश्चास्य संवादो दृश्यते। इदमप्यनल्पप्रामाण्यकारणं यदुत संवादः—इति। स्मृत्यर्थसन्देहे च स्मृत्यन्तरसंवादादेवार्थनिर्णयं निबन्धारोमन्यन्ते।

यदि पुनः वास्तुबलौ—नमो ब्रह्मणे—इत्याचार्य्यस्य सूत्रं क्रमपरमिष्यते कामं ब्रह्मबलावेव नमो ब्रह्मणे इत्यस्तु प्रयोगस्तत्रैव तथाम्नानात्, न त्वन्यत्र प्रमाणाभावात्। कल्प्यतामन्यत्रापीति चेन्न,

नमस्कारान्तत्वबोधकशास्त्रसद्भावात्। न खल्वाचार्य्येणैकत्र नमःपदं पूर्वमुक्तमिति सर्व्वत्र तदेव कल्पयितव्यम्,—अनादृत्य नमःपदान्तत्वबोधकानि मुनिवचनानि,—इति युक्तम्। अथ—

"बहूनामेकधर्म्माणामेकस्यापि यदुच्यते।

सर्व्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः" ॥

इति वचनादस्तु सर्व्वत्रैव नमःपदादित्वमिति चेदुच्यते। एवमपि वास्तुबलावेव तद्भवितुमर्हति, न तु नित्यबलावपि। नित्यबलौ क्लृप्तेन नमस्कारान्तत्वबोधकवचनेन कल्पनानवकाशात्। वस्तुतस्तु वास्तुबलावपि न तद्वचनात् सर्व्वत्र नमःपदादित्वं कल्पयितुं शक्यते। कस्मात्? ब्रह्मबलावेव तदभिधानात्। अपिच। यत्र खल्वेकधर्म्माणां बहूनामेकं सिद्धवदनूद्य किञ्चिदुच्यते, तत्रैव तद्वचनं प्रवर्त्तते। न चात्र बहूनामेकं सिद्धवदनूद्य किञ्चिद्विधीयते। किन्तर्हि?—किञ्चिद्विशिष्टमेवैकं विधीयते। तच्च किञ्चिद्विशिष्टमेवैकं विहितं सद्बहूनाम् एकं भवति—इति नास्यत्र तद्वचनस्यावकाशः। यत्र खल्वेकधर्म्माणां बहूनामेकं धर्म्मिणं—लब्धात्मभावमनूद्य कस्यचिद्धर्म्मस्य विधानं भवति, भवति तत्र तस्य वचनस्यावसर इति धीमद्भिरनुचिन्तनीयम्।

यत्तु—बलिमन्त्राणामन्येषां नमःपदान्तत्वमभ्युपगम्य, ब्रह्मबलौ नमःपदादित्व-नमःपदान्तत्वयोर्व्विकल्पम्—आहुः। तत्र प्रमाणं नास्ति। विकल्पस्य चान्याय्यत्वात् नैषा साध्वी कल्पना। क्रमपरत्वे खल्वाचार्य्यसूत्रस्य, कात्यायनवाक्येन समं तस्य विकल्पायोगाच्चानुचितैषा कल्पना। न खल्वष्टदोषदुष्टोविकल्पः सम्भवन्त्यामपि गतौ

समाश्रयितुमुचितः। पक्षेऽपि प्रामाण्यान्माभूद्वचनस्य प्रमत्तगीतता —इति खल्वभावगत्या समाश्रीयते। तथाचाभियुक्तानां वचनम्।

"एवमेवाष्टदोषोऽपि यद्व्रीहियवपाकयोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते"॥

इति। अतुल्यबलत्वाच्च। न ह्याचार्य्यसूत्रस्य क्रमपरत्वमभ्युपेत्य, पुनः कात्यायनवाक्यात् तद्विरुद्धं नमःपदान्तत्वं ब्रह्मबलौ शक्य-मभ्युपगन्तुम्। न खल्वनयोस्तुल्यबलत्वमस्ति वचनयोः। सेयं—निरङ्कुशत्वात् पुरुषबुद्धीनां—कल्पना समुल्लसिता, न शास्त्रबला-दित्यनादरणीया। अधिकं तु तत्रैव वक्ष्यामः। तस्माद्वास्तुबला-वाचार्य्यनिर्द्देशबलाद्ब्रह्मबलौ नमःपदादित्वमन्यत्र तु नमःपदान्तत्वं मन्त्राणामास्थेयम्॥ ८॥ *॥

**अथापरान् बलीन् हरेत्; उदधानस्य मध्यमस्य द्वारस्याब्दैवतः प्रथमोबलिर्भवत्योषधिवनस्पतिभ्यो-द्वितीय, आकाशाय तृतीयः॥ ९॥**

अथेति पूर्व्वविध्यनुकर्षणार्थम्। पूर्व्वेषामिवामीषामपि बली-नामुभयतः परिषेक इत्यर्थः। कर्म्मप्रदीपोऽप्याह—"सर्व्वेषामुभयतः परिषेकः"—इति। अपरानन्यान् बलीन् हरेत्। कुत्रेमे बलयो-हर्त्तव्याः?—इत्यत्राह;—'उदधानस्य', उदकं धीयते यस्मिन्नुदकं दधाति य इति वोदधानं मणिक उच्यते। षष्ठी चेयं समीपार्था। उदधानस्य मणिकस्य समीपे, नोदधान एवेत्यर्थः। मध्यमस्य द्वारस्य,—गृहस्येत्यर्थात्। 'अब्दैवतः' आपो देवता यस्य, सोऽयम-

द्दैवतः, 'प्रथमः' प्रकृतानां बलीनामाद्योबलिर्भवति। स खल्वयं बलिरुदधानसमीपे निधातव्यः। यस्तु मध्यमस्य द्वारस्य समीपे निधीयते, सोऽयं द्वितीयोबलिरोषधिवनस्पतिभ्यो भवति। तृतीयः खल्वाकाशाय बलिर्भवति। स खल्वयमाकाशदैवतो बलिरन्तरीचे निधातव्यो भवति। कस्मात्? आकाशदैवतत्वादस्य बलेरनिर्देशाच्च स्थानस्य। आकाशदैवते बलौ खल्वन्तरीचमागच्छति हृदयं, तच्चानुचितं परित्यक्तुं विशेषोपदेशविरहात्। स्मृत्यन्तरे चोपदेशात्। स्मृत्यन्तरे खल्वेवमुपदेशोदृश्यते, गौतमीये,—"आकाशायेत्यन्तरीचे"—इति। भट्टभाष्ये तु—"अयमनिर्दिष्टस्थानो यत्र कुत्रचिन्निधेयः" इत्युक्तम् ॥९॥

**अथापरं बलिँ हरेत्,—शयनं वाऽधिवर्चौंवा,* स कामाय वा बलिर्भवति मन्यवे वा ॥ १० ॥**

अथापरं बलिं हरेदित्युक्तार्थम्। शयनं शय्येत्यनर्थान्तरम्। अधिवर्चोमूत्रोच्चारप्रदेशः। वाशब्दचतुष्कञ्चशब्दार्थम्। शयनञ्च प्रत्यधिवर्चञ्च प्रति बलिं हरेत्। हृतस्य स बलिः, कामाय च भवति, मन्यवे च,—इति यथासङ्ख्यम्। तदयमर्थः। शयनं प्रति योबलिर्निधीयते स कामदेवताकोभवति, अधिवर्चः प्रति योबलिर्निधीयते स मन्युदेवताकोभवति—इति। अधिवर्चमिति पाठेऽपि यथोक्त एवार्थः। अत्रापि, "बलिमित्येकवचनात् स्थानद्वयनिर्देशाच्च

* 'अधिवर्चं वा'—इति क्वचित् पाठः। तत्र च 'सान्ता अप्यदन्ताः'—इति गतिः।

बलिद्वयमात्रं सकृद्गृहीत्वा निदध्यात्"—इति भट्टभाष्यम्। तदिदं प्रत्येकपरिषेकपक्षे न सम्भवतीत्यवाचाम।

अन्ये त्वाङ्वांशब्दान् विकल्पार्थान् मन्यमानाः,—"एकएवायं बलिः शयनं वा प्रति देयोऽधिवर्च्चो वा, स कामदैवत्यो भवति मन्युदैवत्यो वा"—इति। नैतदेवम्। "अथ तद्विन्यासः"—इत्युपक्रम्य कर्म्मप्रदीपे, "कामाय, मन्यवे"—इति बलिद्वयसमाम्नानात्। "चतुर्दश नित्याः"—इति च सङ्ख्यावचनात्। बलेरेकत्वे खल्वियं सङ्ख्या लुप्येत! एतेन, येऽप्याहुः,—"शयनं प्रति कामाय रात्रौ, अधिवर्चः प्रत्यहनि मन्यवे"—इति, तेऽपि निरस्ताः। प्रमाणविशेषाभावाच्च॥ १०॥ *॥

## अथ सꣳस्तूपꣳ,* स रक्षोजनेभ्यः॥ ११॥

अथेति विशिष्टमानन्तर्य्यं द्योतयति। मन्युबलिदानानन्तरम्,—इन्द्राय वासुकये ब्रह्मणे—इति बलित्रयं दत्त्वाऽथानन्तरमित्यर्थः। कस्मादेवमुच्यते? उच्यते। आचार्य्य एव वास्तुबलौ दशदिक्षु इन्द्रादिबलिदशकमभिधायासूत्रयत्,—"प्राच्यूर्द्ध्वावाचीभ्योऽहरहर्नित्यप्रयोगः"—इति। प्राच्यूर्द्ध्वाधोदिक्षु खल्विन्द्रवासुकिब्रह्मदैवत्या बलयोवास्तुकर्म्मणि समाम्नाताः। तेषां खल्वमीषां बलीनामहरहर्नित्यं प्रयोगोभवति—इति सूत्रयन्नाचार्य्यः, स्पष्टमिदमाह,—अहरहः इन्द्रवासुकिब्रह्मबलयो भवन्तीति। परिशिष्टप्रकाशेऽप्युक्तम्,—"गृह्यान्तरानुसारेण मन्युबलेरनन्तरम्—इन्द्रवासुकिब्रह्मदै-

* 'संस्तूपं'—इति सो॰ ३।० पुस्तके पाठः

वत्या बलयोदेया:, ततो रक्षःपितृबली"—इति। "चतुर्दश नित्याः"—इति च कर्म्मप्रदीपः।

ते खल्विमे बलयः प्राच्यूर्द्धाधोदिक्षु निधातव्याः। कस्मात्? प्राच्यूर्द्धावाचीभ्योऽहरहर्नित्यप्रयोगः—इति दर्शनात्। क्रमस्तु,— इन्द्राय वासुकये ब्रह्मणे इति। कस्मात्? वास्तुबलौ तथादर्शनात्। वास्तुबलौ खल्वादित इन्द्रबलिस्ततोवासुकिबलिस्ततोऽपि ब्रह्मबलि दृश्यते। परन्तत्र दशत्वाद्वलीनामन्येऽपि बलयोऽन्तरान्तरा सन्निविष्टाः। न चैतावता किञ्चिदपचीयते। अतिदेशागतानां खल्वमीषां बलीनां तदवगतमेव पौर्व्वापर्य्यं स्थानञ्च कल्पयितुमुचितम्। तदाह कर्म्मप्रदीपः। "मन्यवे इन्द्राय वासुकये ब्रह्मणे"—इति।

अत्राह। "एकत्र प्राक्संस्थास्त्वेते बलयो भवन्त्येतद्वचनात्— इति। नैतदेवम्। "एकत्र चेत् कृत्स्ना भवन्ति"—इत्यभिधाय,—"अथ तद्विन्यासः"—इत्युपक्रमादेकत्र कृत्स्नबलिनिधानपक्ष एवैतस्य विन्यासविशेषस्य समाम्नानात्। कल्प्यतेऽनेकत्र निधानपक्षेऽपीति चेत्। उच्यते। कल्पनीयं तावत् स्थानमिति सत्यं, परन्तु युष्मदुक्तं वा कल्प्यते, अस्मदुक्तं वा,—इति भवति विचारणा। तत्र ये बलयो यत्राचार्य्येण समाम्नातास्ते तत्रैव दातुमुचिता- अतिदेशागता अप्यसति विशेषवचने। 'प्राच्यूर्द्धावाचीभ्योऽहरहर्नित्यप्रयोगः"—इति च इदयमागताः प्राच्यूर्द्धाधोदिक्क्रमेण युज्यन्ते परित्यक्तुम्। अधिपतयः खल्विमे आसां दिशामित्येषोऽस्मत्कल्पनायां विशेषः। तदेवमिन्द्रवासुकिब्रह्मबलिदानानन्तरं, संस्तूपं प्रति, "संस्तूपः सम्मार्ज्जनरेणुपुञ्जादिप्रक्षेपस्थानम्,—उत्करण्डिकेति

लोकैरभिधीयते"—इति भट्टभाष्यम्। तमिमं संस्तूपं प्रति, बलिं हरेत्। स खल्वयं बलिः,—रक्षोजनेभ्यो भवति॥ ११॥ *॥

**अथैतद्बलिशेषमद्भिरभ्यासिच्यावसलवि दक्षिणा निनयेत्तत्पितृभ्यो भवति॥ १२॥**

अथशब्दः प्राचीनावीतित्वसव्यजानुपातदक्षिणामुखत्वानि स्मारयति। एतद्बलिशेषम्, एतद्बलिदानावशिष्टमन्नम्, अद्भिरभ्यासिच्याप्लाव्य। तदिदमाप्लावनं, रक्षोबल्यवशिष्टत्वादन्नस्य संस्कारार्थं भवति। शेषं खल्विदमन्नं पितृबल्यर्थं भवति। तस्य च संस्कारोनानर्थकः। आप्लावनं रक्षोबलिशेषस्यान्नस्य न किञ्चित् दृष्टमुपकरोति?—इति चेन्मा करोतु दृष्टमुपकारम्, अदृष्टन्तु करिष्यति। यथा, "स्रुचः संमार्ष्टि"—"अग्निं संमार्ष्टि" "पुरोडाशं पर्य्यग्निं करोति"—इत्येवमादौ। तथा चोक्तं। "तुल्यश्रुतित्वाद्वा इतरैः सधर्म्मः स्यात्"—इति। तदेवमद्भिरभ्यासिच्य, 'अवसलवि' पितृतीर्थेनेत्यर्थः। अवसलविशब्दः खल्वयं पितृतीर्थमाह। तथाच गृह्यान्तरम्। "प्रदेशिन्यङ्गुष्ठयोरन्तरा अवसलवि अपसव्यं वा, तेन पितृभ्योददाति"—इति। 'दक्षिणा' दक्षिणस्यां दिशि निनयेत्। तन्नेदं निनयनं पितृभ्यो भवति। तथाच पित्र्यत्वान्नात्र नमस्कारः प्रयोक्तव्यः, किन्तु पितृभ्यः स्वधेति स्वधाकारेणैष बलिर्दातव्यः। तदाह कात्यायनः।

"स्वाहाकारवषट्कारनमस्कारादिवौकसाम्।
स्वधाकारः पितॄणाञ्च हन्तकारो नृणां मतः।

स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा ।

तदप्येके नमस्कारैः कुर्व्वते नेति गौतमः" ।

इति। एकत्र चेत् सर्व्वे बलयो निधीयन्ते, तर्हि, यथा निधातव्यन्तदाह कर्म्मप्रदीपः। "अथ तद्दिन्यासोवृद्धिपिण्डानिवोत्तरोत्तरांश्चतुरोबलीन्निदध्यात्,—पृथिव्यै, वायवे, विश्वेभ्योदेवेभ्यः, प्रजापतये—इति। सव्यत एतेषामेकैकस्यैकैकम्,—अद्भ्यः, ओषधिवनस्पतिभ्यः, आकाशाय, कामाय—इति। एतेषामपि, मन्यवे, इन्द्राय, वासुकये, ब्रह्मणे—इति। एतेषामपि, रक्षोजनेभ्यः—इति। सर्व्वेषां दक्षिणतः पितृभ्यः—इति, चतुर्दश नित्याः, आकाशप्रभृतयः काम्याः। सर्व्वेषामुभयतः परिषेकः पिण्डवच्च पश्चिमा प्रतिपत्तिः"—इति। आधानदिने च वैश्वदेवबलिकर्म्मणी सायमाहुत्यनन्तरं रात्रावेव कर्त्तव्ये। तदप्याह कर्म्मप्रदीपः।

'ऊर्द्ध्वं पूर्णाहुतेः कुर्य्यात् सायं होमादनन्तरम्।

वैश्वदेवन्तु पाकान्ते बलिकर्म्मसमन्वितम्।

ब्राह्मणान् भोजयेत् पश्चादभिरूपान् स्वशक्तितः।

यजमानस्ततोऽश्नीयादितिकात्यायनोऽब्रवीत्" ।

इति। सोऽयं भूतयज्ञः,—"बलिर्भौतः"—इति वचनात्। एतदनन्तरं वामदेव्यगानं कर्त्तव्यम्। "बल्यन्ते वैश्वदेविके"—इति स्मरणात्। स खल्वयं ब्रह्मयज्ञस्य तृतीयः कालः—इत्यवोचाम।

अथेदानीं मनुष्ययज्ञः कर्त्तव्यः। तदाह कात्यायनः—"नृयज्ञोऽतिथिभोजनम्"—इति। तथाचोक्तम्। "अतिथिभिः कामं सम्भाषेत"—इति। मनुरपि—

"कृत्वैतद्बलिकर्म्मैवमतिथिं पूर्व्वमाशयेत्।
भिक्षाञ्च भिक्षवे दद्यात् यथावद्ब्रह्मचारिणे"।

इति स्मरति। भोजनोपयुक्तस्य पर्य्याप्तस्यान्नस्याभावे यथाशक्ति किञ्चिदप्यन्नमुद्धृत्य ब्राह्मणाय दद्यात्। तदाह कर्म्मप्रदीपः।

"अप्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजे।
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत्।
हन्तकारं मनुष्येभ्यस्तदन्ते निनयेदपः"।

इति। वस्तुतस्तु अतिथिभोजनं तदसम्भवे मनुष्येभ्य इदं हन्तेत्युत्सृज्य किञ्चिदन्नदानं गोभिलीयानां स्वशास्त्रोक्तमावश्यकमित्यवगन्तव्यम्। अन्नस्याप्यभावे मूलादिकमपि दद्यात्। तदाह गौतमः। "अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादामूलफलशाकेभ्योऽथैवं मनुष्ययज्ञं समाप्नोति"—इति। "अहरहर्दद्यादोदपात्रादथैतं मनुष्ययज्ञं समाप्नोति"—इति च शतपथीये ब्राह्मणे। अत्यन्तासम्भवे च भिक्षादानेनापि कस्याञ्चिदवस्थायां मनुष्ययज्ञोनिर्व्वहति। अतएव "भोजनं हन्तकारं वा"—इत्येवमादिवचनेषु विकल्प-निर्द्देशः सङ्गच्छते। भिक्षुकस्य चाभावेऽग्रं गोभ्यो दद्यात्, गवामप्यभावेऽग्नौ क्षिपेत्। "भिक्षुकाभावे चाग्रं गोभ्यो दद्यादग्नौ वा क्षिपेत्"—इति विष्णुस्मरणात्। अन्येऽपि नृयज्ञप्रकाराः तन्त्रान्तरेषु द्रष्टव्याः

अथेदानीं पितृयज्ञः वक्तव्यः। स चानेकप्रकारः। तत्र तावत् पित्रादींस्त्रींस्त्रींश्च मातामहादीनुद्दिश्य यथोक्तब्राह्मणभोजनमिति एकः कल्पः। तदाह कात्यायनः।

"श्राद्धं वा पितृयज्ञः स्यात् पित्र्योबलिरथापि वा" ।

इति ।

"अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये ।

अदैवं नास्ति चेदन्योभोक्ता भोज्यमथापि वा" ।

इति च । वायुपुराणे ।

"अप्येकं भोजयेद्विप्रं षणामप्यन्वहं गृही ।

अतृप्ताः प्रहरन्त्यस्मै वज्रेणैते षड़स्त्रिणा" ।

इति । नित्यश्राद्धे तु विशेषोऽभिधीयते । यथा हारीतः ।

"नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्" ।

इति । मनुः ।

"एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिके ।

न चैवात्राशयेत् कञ्चिद्वैश्वदेवं प्रति द्विजम्" ।

इति । मत्स्यपुराणम् ।

"नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम् ।

अदैवं तद्विजानीयात् पार्व्वणं पर्व्वसु स्मृतम्" ।

इति । लिखितजातूकर्णौ ।

"नित्यश्राद्धमदैवं स्यात् पिण्डहोमविवर्जितम्" ।

इति । भविष्यपुराणम् ।

"अग्नौकरणमर्घ्यञ्चावाहनञ्चावनेजनम् ।

पिण्डश्राद्धे प्रकुर्व्वीत पिण्डहीने विवर्ज्जयेत् ।

इति । यद्यप्यर्घ्यमत्र निषिद्धं, तथापि प्रकारान्तरेण तदपि गृह्यान्तरे विहितम् । तथाच गृह्यान्तरम् । "नैत्यिके वर्हिर्दत्त्वोदकञ्च

पितर एतद्वोऽर्घ्यमिति पाणिनैवाद्भिस्तिलमिश्राभिरर्घ्यं दद्यादन्य-देवमाचान्तेषु पितृभ्यः स्वधेति पितॄणामक्षय्यमस्त्विति च। सह चेदश्नीयात् पूर्वमेव स्वधाऽक्षय्यस्त्वोरभिदध्यात्"—इति। एवञ्च पार्वणविहितेतिकर्त्तव्यताकमर्घ्यमत्र न भवति, भवति तु ततो-ऽन्यादृशमेवेत्यभूतमिति। अस्माच्च गृह्यान्तरादेवं विकल्पोऽवगम्यते, सह वाऽश्नीयात् पश्चादेति। मन्वादिभिस्तु पश्चाद्भोजनमेवोपदिष्टम्। तच्च परतोदर्शयिष्यामः। व्यासः।

"आवाहनस्वधाकारपिण्डाग्नौकरणादिकम्।
ब्रह्मचर्य्यादिनियमं विश्वान्देवांस्तथैवच।
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत्।
दत्त्वा च दक्षिणां शक्त्या नमस्कारैर्विसर्ज्जयेत्।
एकमप्याशयेन्नित्यं षण्णामप्यन्वहं गृही"।

इति। स्वधाकारः स्वधावाचनम्। शातातपः।

"पिण्डनिर्व्वापरहितं यत्तु श्राद्धं विधीयते।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते।
अक्षय्यदक्षिणास्वस्ति सौमनस्यं तथास्त्विति"।

इति। एवञ्च—

"नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्ज्जितम्।
दक्षिणारहितं ह्येतद्दातृभोक्तृव्रतोज्झितम्"।

इति दक्षिणानिषेधोऽशक्तविषयः—इति तत्त्वज्ञतः। अतएव शक्त्या दक्षिणादानं व्यासः स्मरति। तदिदं नित्यश्राद्धं सम्भवे बहुब्राह्मणकमसम्भवे त्वेकब्राह्मणकमपि भवति। सोऽयं मुख्यः

कल्पः। श्राद्धकरणेऽशक्तस्तु यथाशक्ति किञ्चिदप्यन्नम् उद्धृत्य पितृभ्य इदं स्वधेत्युच्चार्य्यान्नसमीपे उदकं निनयेत्। तच्चान्नं ब्राह्मणाय दद्यात्। 'अप्येकमाशयेद्विप्रम्'—इत्यभिधाय,—"अप्युद्धृत्य यथाशक्ति",—इत्येवमादिकात्यायनस्मरणात्। न चेदं श्राद्धविधायकमिति वाच्यं, प्रमाणाभावात्। श्राद्धस्य पूर्व्वेण वाक्येन विहितम्—'श्राद्धं वा पितृयज्ञः स्यात्'—इति, 'अप्येकमाशयेद्विप्रम्'—इति च। कथमिहापि विधीयेत। तस्मात्—'अप्येकमाशयेत्'—इति बहूनामसम्भवे एकब्राह्मणभोजनम्—एकेनापि ब्राह्मणेन श्राद्धकरणमित्येतत्परम्। 'अप्युद्धृत्य यथाशक्ति'—इति तु ब्राह्मणभोजनोपयुक्तान्नासम्भवेन श्राद्धासम्भवे—किञ्चिदप्यन्नमुद्धृत्य देयमित्याह। भिन्नौ खल्विमौ कल्पौ भवतः—यच्चैकब्राह्मणकश्राद्धं, यच्चोद्धृत्याल्पमपि देयमिति। तत्त्वकृतोऽप्येवम्। भट्टनारायणस्याप्येष एव स्वरसः। एतेन—

"नित्यश्राद्धेष्वसामर्थ्यात् त्रीन् द्वावेकमथापि वा।
भोजयेत् पितृयज्ञार्थं दद्यादुद्धृत्य दुर्ब्बलः"।

इति।

"यथाशक्त्यन्नमुद्धृत्य पित्र्येण विधिना सदा।
आहूय ब्राह्मणं दद्यात्तत्कुले वा समर्पयेत्"।

इति चैवमादिपुराणवाक्यमपि व्याख्यातम्। तच्चाप्यशक्तस्य योऽयं भूतयज्ञे पितृबलिर्दीयते, तेनैव पितृयज्ञः कृतो भवति। 'पित्र्योबलिरथापि वा'-इति वचनात्। यदा कस्याञ्चिदवस्थायाम्—'यज्ञादेव निवर्त्तते'—इत्येवमादिकायां न हरति बलीन्, तदा

तर्पणेनैव पितृयज्ञः कृतोभवति। सोऽयं छन्दोगानां स्वशास्त्रपरिभाषितश्चतुर्विधः पितृयज्ञः श्राद्धं पितॄनुद्दिश्य ब्राह्मणायान्नदानं पित्र्यबलिस्तर्पणञ्चेति।

तदिदं तर्पणं सर्व्वस्यामेव दशायामावश्यकं यथाशक्ति चान्यत्। इयान् परं विशेषो यदशक्तस्य तर्पणेनापि प्रत्यवायः परिहृतो भवति। समुच्चयेन सर्व्वेषां पञ्चाणामुपदेशस्तु शक्ततमस्येति परिशिष्टप्रकाशः। तथा गौतमः। "नित्यं स्वाध्यायः पितृभ्यश्चोदकदानं, यथोत्साहमन्यत्"—इति। अत्र च,—तर्पणब्रह्मयज्ञयोः पूर्व्वमुक्तयोरपि नित्यमित्यादिना पुनरभिधानं यज्ञत्रयानुष्ठानाशक्तावङ्गवैकल्येनाप्यनयोरवश्यानुष्ठेयत्वार्थम्—इति कल्पतरुप्रभृतयः। अन्ये त्वेषां पञ्चाणां यथाशक्ति समुच्चयविकल्पावाहुः। यदा पुनर्न शक्नोति पृथक् तर्पयितुं, तदा स्नानाङ्गेनापि तर्पणेन पितृयज्ञफलमधिगच्छति।

"यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः।
तेनैव सर्व्वमाप्नोति पितृयज्ञक्रियाफलम्"।

इति मनुवचनात्। सोऽयमुक्तः पितृयज्ञः। उक्ताश्च पञ्चमहायज्ञाः॥ १२ ॥ ० ॥

अथेदानीमुक्तस्यैव विशेषोऽभिधीयते—

**आसीन एवाग्नौ जुहुयात्॥ १३॥**

आसीन उपविष्ट एव। नोर्द्धः, न वा प्रह्वः ॥१३॥०॥

**आसीनः पितृभ्यो दद्यात्, यथोपपादमितरान्॥ १४॥**

आसीनः पितृभ्यो बलिं दद्यात् हरेत्। आसीनः—इत्येतदवाच्यम्?—

इति चेन्न, एवं हि आसीन इत्यनुषज्येत । तदेतदनुशयानाचार्य्य— आसीन इत्याह। पितृभ्योदद्यात् यथोपपादम्—इत्ययमपि सम्बन्ध— आशङ्क्येत, साऽप्याशङ्का माभूदिति च तद्वचनम् । पुनरुक्तञ्च गौभिले ग्राह्यमिति चावोचाम । इतरान्,—अपरान् बलीन् । कस्मादपरान्? पितृबलेरिति ब्रूमः । कस्मात्? प्रकृतत्वात् । प्रकृतः खल्वत्र बलिः पित्र्य एवेति तदपेक्षयैवापरत्ववर्णनमुचितम् । तान् खल्विमान् पित्र्यबलेरन्यान् सर्व्वान् बलीन्, 'यथोपपादं' यथोपपद्यते दानं, तथैव दद्यात् न पुनरासीन एवेत्ययमस्ति नियम इत्यर्थः । तेनाधिवर्च्चःप्रदेशस्याशुचितया दूरस्थ एव प्रक्षिप्य दद्यादूर्द्धः सन् । एवमन्यत्रापि क्वचित् प्रह्वः क्वचिच्चान्यादृश एवेति यथायथमूहनीयम् ॥ १ ४ ॥ ० ॥

## स्वयन्त्वेवैतान् यावद्वसेद्बलीन् हरेत् ॥ १५ ॥

यावद्गृहे वसेत्, तावदेतान् सर्व्वानेव बलीन्,—न पुनः पित्र्यबले- रपरानेवेत्यर्थः । स्वयमेव यजमानो हरेन्निष्पादनलसः सन् । गृहे वसन् खल्वसौ यजमानः स्वयमेव बलिहरणं कुर्य्यान्नान्यद्वारा इति सूचयन्नाचार्य्यः, प्रवसन्नन्यद्वाराऽपि—इत्येतत् सूचयति । तस्मात् स्वयमेवेति स्वयं सम्भवाभिप्रायं वचनम् । उपलक्षणञ्चैतद्बलिग्रहणं होमादीनामपीति द्रष्टव्यम् । तुशब्दस्य स्वयं करणपक्षे फलविशेषं द्योतयति ॥ १ ५ ॥

## अपि वाऽन्यो ब्राह्मणः ॥ १६ ॥

अपिवा, अथवा । अशक्तौ यजमानस्य प्रवासे वेत्यर्थः । अन्यो-

ब्राह्मणो, 'बलीन् हरेत्'—इत्यनुवर्त्तते। अथवा। अपि वेत्येतत् चत्रियविषयमाचार्य्यस्य पचान्तरम्। स्वयमेवेत्येतन्नियममननुजानन्नाचार्य्यः—'अन्यः'—इत्याह। स्वस्मादन्योऽपि ब्राह्मणो राज्ञो-बलिहरणादिकं कुर्य्यादित्यर्थः। तथाच स्मरति भगवान्मनुः।

"पुरोहितञ्च कुर्व्वीत, वृणुयादेव चर्त्विजम्।
तेऽस्य गृह्याणि कर्म्माणि कुर्य्युर्वैतानिकानि च"॥

इति ॥१६॥०॥

## दम्पती एव ॥१७॥

जाया च पतिश्च—दम्पती, भार्य्यापती—गृहपतिस्तत्पत्नी चोच्येते। ताविमौ दम्पती एव,—बलीन् हरेयाताम्,—इति सम्बध्यते ॥ १७ ॥

## इति गृहमेधिव्रतम् ॥१८॥

इत्येवमहरहः पञ्चानां महायज्ञानामनुष्ठानं गृहमेधिव्रतम्, गृहे ययोर्मेधो यज्ञो भवति, ताविमौ गृहमेधिनौ दम्पती—इति ब्रूमः। तयोर्गृहमेधिनोर्दम्पत्योर्व्रतं शास्त्रविहितोनियम इत्यर्थः। तदेवं पञ्चमहायज्ञावशिष्टमन्नं दम्पती भुञ्जीयाताम्।

"भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैवहि।
भुञ्जीयातान्ततः पश्चादवशिष्टन्तु दम्पती"॥

इत्येवमादिस्मरणात्। मनुरपि।

"देवानृषीन् मनुष्यांश्च पितॄन् गृह्याश्च देवताः।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत्"।

इति। प्रकारान्तरं पूर्व्वमुक्तम्। अकृत्वा च पञ्च महायज्ञान् भुञ्जतोऽन्योर्व्रतलोपोभवतीति विज्ञायते। गृहमेधिनोरेवैतद्व्रतं, तावेव पूर्वं भुञ्जानौ प्रत्यवायभागिनौ भवतः। सुवासिनीप्रभृतयस्तु पूर्वमेव भोजनीयाः। तदाह मनुः।

"सुवासिनीः कुमारांश्च रोगिणोगर्भिणीस्तथा।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन्"

इति। तथा गौतमः। "भोजयेत् पूर्व्वमतिथिकुमारव्याधितगर्भिणीसुवासिनीस्थविरान् जघन्यांश्च"—इति।

"अदत्वा यस्तु एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः" ॥

इति च धर्म्मशास्त्रम् ॥ १८ ॥

दम्पती एव बलीन् हरेयाताम्—इत्युक्तम्. अथेदानीं कश्चिदिह विशेषोऽभिधीयते—

## स्त्री ह सायं प्रातः पुमानिति ॥ १९ ॥

स्त्री पत्नी, ह किल। स खल्वयम्—ऐतिह्यार्थकोऽनर्थको वा निपातः। इति होचुर्वृद्धाः—इति ह्यैतिह्यमुच्यते। सेयं पत्नी, सायं रात्रौ, बलीन् हरेत्—अमन्त्रं, तुष्णीम्—इत्यर्थः। कस्मात् पुनः कारणादमन्त्रमुच्यते पत्न्या बलिहरणम्? इयमेव तावन्मात्रं कुतोनाध्याप्यते? उपदेशादिति ब्रूमः। अमन्त्रमेव खल्वस्या बलिहरणमुपदिश्यते—इति नेयमध्याप्यते इत्यदोषः। तथाच मनोः स्मरणम्।

"सायन्त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्।

वैश्वदेवं हि नामैतत् सायं प्रातर्विधीयते" ॥

इति। तदनेन रात्रावपि वैश्वदेवबलिकर्म्मणोरविशेषेण कर्त्तव्यत्वं दर्शितम्। अस्याञ्च स्मृतौ—सिद्धस्य अन्नस्य—इति पचप्राप्तमनूद्यते गुणभूतं, न तु विधित्सितम्। सायं बलिं हरेत्—इत्ययमत्र सम्बन्धः, न सायं सिद्धस्य अन्नस्य—इति। तस्मात्—"यस्योभयं हविरार्त्तिमार्च्छेत्"—इतिवत् नित्यानुवादोऽयम्—अन्नस्य सिद्धस्य—इति। 'अथ हविष्यस्यान्नस्य'—इतिवन्मुख्यकल्पपरिकीर्त्तनाभिप्रायं वा वचनम्।

तदिदं बलिहरणद्रव्याभिधानपरं शास्त्रं नान्यत् परिसञ्चष्टे। अभावे खल्वन्नस्य प्रतिनिधिमप्युपादाय बलिहरणं कर्त्तुमुचितम्। कस्मात्? प्रतिनिधिशास्त्रस्यार्थवत्त्वोपपत्तेः। प्रतिनिधिशास्त्रस्य खल्वेवमर्थवत्तोपपद्यते। इतरथा प्रतिनिधिशास्त्रमनर्थकं—प्रलापमात्रं स्यात्। तच्चोदाहरिष्यामः। न चैतदुचितम्। अहनीति चेन्नाविशेषात्। इति चेत् भवान् पश्यति,—अहनि प्रतिनिधिशास्त्रमर्थवत् कथमनर्थकं प्रलापमात्रम् उच्यते—इति। तत्र ब्रूमः। नैषा कल्पना सम्भवति। कस्मात्? अविशेषात्। विशेषाभावादित्यर्थः। अहन्यपि, सिद्धस्य इति, अन्नस्य—इति च श्रवणम्, अविशेषेणोपलभ्यते—इति। तत् यदि रात्रौ प्रतिनिधिशास्त्रं न प्रवर्त्तते, अहन्यपि न प्रवर्त्तिष्यते, हेत्वविशेषात्। अप्रवृत्तिहेतुः खल्वहनि रात्रौ च न विशिष्यते—उभयत्रापि समान इत्यर्थः। तथाचोक्तम्। "अथ हविष्यस्यान्नस्योद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्याग्नौ जुहुयात्"—इति। मनुरपि स्मरति।

"वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् ।
आभ्यः कुर्य्याद् देवताभ्यो ब्राह्मणो होममन्वहम्" ॥

इति। "वैश्वदेवादन्नात् पर्य्युक्ष्य जुहोति"—इति च गृह्यान्तरम्। आह च कात्यायनः कर्म्मप्रदीपे।

"सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च ।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत्" ॥

इति। तदत्रानश्नतोऽपि वैश्वदेवोबलिकर्म्म च कर्त्तव्यम्—इत्युक्तम्। तस्मात् इयमेवावधारणा—सायं बलिं हरेत्—इति सम्बन्धः, न सायं सिद्धस्य—इति।

अथ मन्यसे—अतिथ्यनुरोधेन पाकसम्भव एव अनश्नतोरात्रौ करणम्—इति। तन्नोच्यते। नाप्रमाणत्वात्। न खल्वेषा कल्पना सम्भवति;—अतिथ्यनुरोधेन यदा पच्यते, तदैव रात्रौ अनश्नता वैश्वदेवादिकं कर्त्तव्यम्, नापचमानेन—इति। कस्मात्? अस्मिन्नर्थे प्रमाणाभावात्। न खलु पाकार्थता वैश्वदेवबलिकर्म्मणोः शक्यते वक्तुम्। किं कारणम्? पुरुषसंस्कारत्वात्। कुतः पुनरनयोः पुरुषसंस्कारत्वमुच्यते? "सहधर्म्मचारिणीसंयोगः, पञ्चानां महायज्ञानामनुष्ठानम्"—इति गौतमेन पुरुषसंस्कारमध्ये पाठात्। "तानेतानहरहः कुर्व्वीत"—इति—

"स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" ॥

इति च पुरुषार्थत्वावगमात्। वैश्वदेवं बलिकर्म्म च, अकुर्व्वाणः पुरुषः किल्बिषी भवति—इति च कात्यायनेन सुव्यक्तमनयोः

पुरुषार्थत्वाभिधानात्। "पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति सन्तिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः—इति चारण्यके तैत्तिरीये। तदेव खल्वमीषां मूलम्—इत्यभियुक्ता मन्यन्ते। तस्मात् पुरुषार्थत्वमेवामीषां महायज्ञानां, न पुनर्वैश्वदेवबलिकर्म्मणोः पाकार्थत्वम्।

अथ उच्यते—"पुरुषार्थयोरेव सतोरनयोः पाकार्थतामप्यनुमन्यामहे"—इति। अत्रोच्यते। काममनुमन्येमहि पाकार्थतामप्यनयोर्यदि प्रमाणमत्र किञ्चित् उपलभेमहि। न तु प्रमाणमिह किञ्चिदुपलभामहे। तस्मादसङ्गतमनयोः पाकार्थत्वम्—इति। स यदि ब्रूयात्,—अकृत्वा वैश्वदेवादिकमन्नं भुञ्जानस्य दोषश्रवणादन्नसंस्कारत्वमनयोरनुमातव्यम्—इति। तं प्रति ब्रूयात्। ब्रह्मयज्ञादिकमप्यकृत्वा भुञ्जानस्य दोषश्रवणादनैकान्तिकमेतल्लिङ्गं नान्नसंस्कारत्वमनयोरनुमापयितुमर्हति—इति। तदिदं दोषकीर्त्तनम्, आवश्यकत्वममीषाम् अवगमयति,—इति पुरुषार्थशास्त्रैस्तुल्यवदेव तात्पर्य्यम्। तत्प्राये समाम्नानाच्च। पुरुषार्थप्राये चाध्यापनादिकर्म्मप्रवाहे वैश्वदेवबलिकर्म्मणी समाम्नायेते। तदनयोरपि पुरुषार्थत्वमवधार्य्यते। तथाचोक्तम्। "प्राये वचनाच्च"—इति।

पुरुषार्थयोरनयोरन्नसंस्कारार्थत्वमपि, न साम्प्रतमभ्युपगन्तुम्। पुरुषार्थत्वे हि द्रव्यं वैश्वदेवाद्यर्थं भवति, अन्नसंस्कारार्थत्वे त्वन्नार्थं वैश्वदेवादिकं स्यात्। अस्तु कोदोषः?—इति चेन्नासम्भवात्। न खल्वेतत् सम्भवति,—अन्नार्थं वैश्वदेवादिकं, वैश्वदेवाद्यर्थञ्चान्नम्,—इति। कस्मात्? विरोधात्। विरुध्यते खल्वेकस्य गुणभावः प्रधान-

भावस्य। न ह्येकमेव वस्तु एकमेवापेक्ष्य एकदैव प्रधानं गुणभूतञ्च भवितुमर्हति। इतश्च। वाक्यभेदप्रसङ्गात्। कथं वाक्यभेदप्रसङ्गः? वचनव्यक्तिभेदात्। वचनव्यक्तिः खल्वनयोर्भिद्यते—इति भिद्येत वाक्यम्। वैश्वदेवेनान्नं संस्कुर्यात्—इत्येकस्मिन् पक्षे वचनव्यक्तिर्भवति, अन्नेन वैश्वदेवमभिनिर्व्वर्त्तयेत्—इति चान्यस्मिन्। एकं खल्विदं वाक्यं—'हविष्यस्यान्नस्य जुहुयात्'—इति। न च भङ्क्त्वा वाक्यम्, उभयार्थत्वं कल्पयितुमुचितम्।

आह—'अथ हविष्यस्यान्नस्योद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्याग्नौ जुहुयात्'—इत्यस्मादेवाम्नानात् द्रव्यार्थत्वमवगम्यते—इति। न—इति ब्रूमः। कस्मात्? अर्थकर्मवदाम्नानात्। अर्थकर्मण्यपि सायं प्रातर्होमे समाम्नायते—"अथ हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वा अकृतस्य वा"—इति। तत्समानमिदमपि आम्नायते—"हविष्यस्यान्नस्य"—इति। तस्मात्—"सोमेन यजेत"—इत्येवमादिवदिहापि द्रव्यमुच्यते जुहोतेरुपकारकम्। सेयं द्रव्यचोदना वा स्यात्, विशिष्टकर्मचोदना वा स्यात्, सर्व्वथाऽपि द्रव्यं कर्म्मार्थतां नातिशेते। यथा खल्वपचारे सोमस्य पूतिका उपादीयन्ते वचनबलात्, एवमिहाप्यपचारेऽन्नस्य अन्यदप्युपादेयं वचनबलात्—इति न किञ्चिदनुचितम्।

न खल्वत्र द्रव्यस्य ईप्सितभावः अवगम्यते। हविष्यादन्नादुद्धृत्य तेन होममभिनिर्व्वर्त्तयेत्—इति खल्वत्र वचनव्यक्तिर्भवति। कस्मात्? "वैश्वदेवादन्नात् पर्य्युक्ष्य स्वाहाकारैर्जुहुयात्"—इति ग्रन्थान्तरदर्शनात्। अथ वा। हविष्येनान्नेन होममभिनिर्व्वर्त्तयेत्—इत्ययम् एव अर्थः। यदाऽप्यवयवार्था षष्ठीयमुच्यते, तदापि हविष्यस्यान्नस्या-

वयवेन जुहुयात्—इति वचनार्थः। सर्व्वथाऽपि द्रव्यमेव कर्म्मार्थं न कर्म द्रव्यार्थमवगम्यते। येषामपि हविष्यस्यान्नस्य अवयवं जुहुयात्—इति वचनव्यक्तिः, तेषामपि न कर्मणः अन्नावयवार्थत्वमवगन्तव्यम्। न खल्वन्नावयवेन संस्कृतेन किञ्चित् प्रयोजनमस्ति! तदर्थञ्चेत् कर्म्म, तदप्यनर्थकं स्यात्। यः खल्ववयवो जुहोतिना सम्बध्यते, स तेनैवोपचीयते, नावतिष्ठते, यश्चावतिष्ठते, नासौ जुहोतिना सम्बध्यते!। न च वैश्वदेवादिकमन्नस्य किञ्चित् उपकरोति। न खल्वेवम् अन्नार्थता कर्म्मणः शक्यते वक्तुम्। "यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात्"—इति सूत्रणात्।

अथ वैश्वदेवादिकमन्नस्य मा करोतु दृष्टं कञ्चिदुपकारम्, अदृष्टन्तु करिष्यति। अदृष्टोऽपि उपकारोलोके बहुत्वमुपलभ्यते। ग्रामान्तरात् आगतानां पुरुषाणां पर्य्यग्निकरणेन खल्वदृष्ट उपकारः क्रियते—इत्युच्यते। न—इति ब्रूमः। न करिष्यति अदृष्टमपि उपकारं वैश्वदेवो द्रव्यस्य। कस्मात्? तस्य शब्दमूलत्वात्। शब्दमूलं खल्वदृष्टमिष्यते। न खल्वस्ति शब्दः,—वैश्वदेवो द्रव्यस्य उपकरोति,—इति। शब्दस्त्वस्य पुरुषार्थतामाह—'महायज्ञैश्च'—इति, 'तानेतान्'—इति चैवमादिः। सा खल्वियं कल्पना पुरुषबुद्धिमूला इत्यनादरणीया। तथाचोक्तम्। "धर्मस्य शब्दमूलत्वाद् शब्दमनपेक्षं स्यात्"—इति। न च एकेनादृष्टेन पुरुषार्थतया चरितार्थे शास्त्रे अन्यदपि अदृष्टं कल्पयितुमुचितम्! लोकेऽपि नात्यन्तमदृष्ट उपकारोदृश्यते, यत्र चात्यन्तमदृष्ट उपकारः, तत्र प्रमाणमपि न दुर्लभम्—इत्यनुदाहरणम्।

स खल्वयम्—'अन्नस्य'—इत्युपदेशोऽन्नस्य होमस्य च सम्बन्धं करोति, सम्बन्धे च सति—"द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः"—इति, "भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते"—इति चानया तन्त्रयुक्त्या, द्रव्यं गुणभावेन सम्बध्यते। सेयं तृतीयार्थे षष्ठी विभक्तिः,—इति, "शक्तून् जुहोति, मारुतं जुहोति, एककपालं जुहोति"—इत्येवमादिवत् इहापि द्रव्यमेव कर्मार्थं, कर्म तु पुरुषार्थम् एव, न द्रव्यार्थम्—इति सिद्धम्। अत एव स्मर्य्यते। "अहरहः पञ्चयज्ञान्निर्व्वपेत् अपि मूलफलोदकशाकेभ्यः"—इति। "अहरहः स्वाहां कुर्य्यादन्नाभावे केनचिदाकाष्ठात् देवताभ्यः, पितृभ्योमनुष्येभ्यश्चोदपात्रात्"—इति च गृह्यान्तरम्। "यदग्नौ जुहोत्यपि समिध तद्देवयज्ञः सन्तिष्ठते, यत् पितृभ्यः स्वधाकरोत्यप्यपस्तत् पितृयज्ञः सन्तिष्ठते"—इति च तैत्तिरीये ब्राह्मणे।

"न चेदुत्पद्यतेऽन्नन्तु अद्भिरेनान् समापयेत्"—

इति च स्मरणम्। तदेवमादिशास्त्रेभ्यः—सुव्यक्तमिदमवगम्यते; यत् द्रव्यमेव कर्म्मार्थम्—इति, कर्म प्रधानं पुरुषार्थम्—इति च। न हि द्रव्यार्थकर्मणां द्रव्याभावेऽपि करणमस्ति। पुरुषार्थमेव हि कर्म, अतद्रव्यापचारेऽप्यन्येन केनचित् यथाकथञ्चित् क्रियते, द्रव्यस्य गुणभूतत्वात्। द्रव्यार्थत्वे तु कर्मणश्चोदितद्रव्याभावे लोप एव स्यात्। न खलु प्रैयङ्गवेऽपि चराववघातः क्रियते, न वा तदर्थं व्रीहय उत्पाद्यन्ते। तदिदं प्रतिनिधिविधानपरं शास्त्रम् अन्नाभावेऽप्यन्येन होममुपदिशत् कर्मनिर्वृत्तेरीप्सिततमत्वं दर्शयति। तस्मात् न कर्मणो द्रव्यार्थता। तदुक्तम्। "यैर्द्रव्यं न

चिकीर्ष्यते, तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात्'—इति। मनुरपि—

"वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत्।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत्" ॥

इति पाकान्तरेणान्नदानपक्षेऽपि, न बलिं हरेत्—इत्याचक्षाणः द्रव्यस्यैव कर्म्मार्थतामनुजानाति—इत्यवगम्यते। इतरथा कथमिवासंस्कृतस्यान्नस्य भोजनमनुजानीयात्! आचार्य्योऽपि वक्ष्यति। "यद्येकस्मिन् काले व्रीहियवौ प्रक्रियेयाताम्, अन्यतरस्य कृत्वा कृतं मन्येत"—इति, "यद्येकस्मिन् काले पुनः पुनरन्नं पच्यते सकृदेवैतद्बलितन्त्रं कुर्व्वीत"—इति चैवमादि।

अथ,—"अकृतस्य नाश्नीयान्न चान्नमाशयेत्"—इति, गृह्यान्तरम् अकृतस्य अशनं निषेधति। किमतो भविष्यति? उच्यते। एतदतो भविष्यति,—अकृतस्य अशननिषेधेन होमस्य अन्नसंस्कारत्वमनुमास्यामहे;—होमः खल्वन्नं संस्करोति, तदभावे चासंस्कृतमन्नं नात्तव्यम्,—इति। अत्रोच्यते। एवमपि, अन्येषामवैष होमोऽन्नार्थः स्यात्, न त्वस्माकम्। अपि च। नैषा कल्पना सम्भवति—अन्नार्थं वैश्वदेवः—इति। कुतः? तदुच्यते। पञ्चमहायज्ञानां खलु तैत्तिरीयारण्यकमेव मूलमाचक्षते। तत्र च पुरुषार्थत्वममीषाम् अवगम्यते। तच्च पुरस्तादुपदर्शितम्। सेयं निर्मूला कल्पना नादरणीया। तस्मात् होमभोजनयोः क्रमः इह विधित्सितः—इत्यवगच्छामः। पूर्व्वं यस्य न हूयते, तन्न अत्तव्यम्—इति, अनया वचनव्यक्त्या खल्वस्मत्पक्षोऽनुगृह्यते। अथ वा।

अकृतस्य—इति कर्त्तरि निष्ठा। न कृतं येन—इति वा विग्रहः, "अकृतस्य प्रायश्चित्तम्"—इत्येवमादिवद्व्याख्येयम्। होममकुर्व्वतोऽन्नं नाश्नीयात्, न च आशयेत्—इति वचनार्थः। अत एव—'अकृतस्य'-इति, 'अन्नम्'—इति च वैयधिकरण्येन पदद्वयमुपादीयते। अन्यथा खलु 'अकृतस्य'—इति षष्ठी वा न स्यात्, 'अन्नम्'—इति वा द्वितीया। तदिदम् एकं वचनं बहूनामनुरोधान्नेयं, न तु एतदवष्टभ्य बहूनि वचनानि अन्यथा नेयानि—इति युक्तम्। स्मरन्ति च।

विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम्।
तुल्यप्रमाणसत्त्वे तु न्याय एव प्रवर्त्तकः" ॥

इति। सुव्यक्तमप्यस्यान्नार्थत्वस्मरणं यदि कथञ्चिदुपलभ्येतापि, तर्हि तदपि क्लृप्तश्रुतिविरोधादनपेक्षणीयमेव प्रेक्षावताम्। किं पुनरङ्ग? सन्दिग्धार्थस्य तदानुगुण्येन वर्णनम्। तस्मात्—वैश्वदेवादिकमन्नार्थम् उभयार्थं वा,—इत्यसङ्गता कल्पना।

तदेवं सिद्धेऽपि वैश्वदेवस्य पुरुषार्थत्वे, अन्नस्य सिद्धस्य—इति यद्यनुवादो वा मुख्यकल्पाभिप्राय वा न स्यात्, नियम्येत तर्ह्यन्नम्। परिसङ्ख्यायेत चान्यत् द्रव्यम्। भिद्येत तर्हि वाक्यम्। कथम्? रात्रौ वैश्वदेवः कर्त्तव्यः, स च सिद्धेनैव,—इति वचनव्यक्तिभेदात्। न चैतदपि सम्भवति, प्रतिनिधिवचनानामनर्थकत्वापत्तेः। तस्मात् पाकाभावेऽपि रात्रौ वैश्वदेवादिकमुदकादिनापि कर्त्तुमुचितम्। न खलु पाकाभावे—'अनश्नताऽपि रात्रौ वैश्वदेवः कर्त्तव्यः'—इति शास्त्रं न प्रवर्त्तते। तत् किमिति,

अकारणमेव शास्त्रमिदमतिक्रम्यते!। न च शास्त्रं नामातिक्रमितव्यम्। 'सततम्'—इति चाभिधानात्। अनश्नताऽपि सततं वैश्वदेवो-बलिकर्म्म च कर्त्तव्यम्,—इति खल्वभिहितं कात्यायनेन। सेयं 'सततं' श्रुतिरेवं सति उपरुध्येत!। न खल्वेवमियम् अनुगृह्यते। तस्मान्न किञ्चिदेतत्।

यदि पुनर्नियम्यते अन्नं, तर्हि तदर्थवत्तोपपत्तेः, 'अनश्नताऽपि सततम्,'—इति च स्मरणात्, पुरुषार्थत्वाच्चास्य, अनश्नताऽपि वैश्वदेवार्थमेव पुनः पाकः क्रियताम्। पाकेनैव चेत् वैश्वदेवः कर्त्तव्यः, तर्हि अयमेव बलादपि पाकमानयिष्यति। तस्मात्—यद्येवमाग्रहातिशयं करोषि;—सिद्धेनैव वैश्वदेवः कर्त्तव्यः,—इति, तर्हि अनुमन्यस्व अतिथ्यनुरोधमन्तरेणापि अनश्नतोऽपि पुनः पाकम्। किमिति,—अतिथ्यनुरोधेन पाकाभावे वैश्वदेवलोपं कथयसि—इति न विद्मः। एतेन—

"पुनः पाकमुपादाय सायमप्यवनीपते!।
वैश्वदेवनिमित्तं वै पत्न्यमन्त्रं बलिं हरेत्" ॥

इत्येवमादिकं पुराणवचनमपि व्याख्यातम्। इदं हि वचनं वैश्वदेवनिमित्तं पाकमुपादायेति वैश्वदेवनिमित्तं पाकं सुव्यक्तमाह। अन्यथा खल्वश्नतोऽपि रात्रौ पाकाभावे नास्ति वैश्वदेवादिकम्,—इत्यापतति। न चैवम् इष्यते। तस्मात्,—"स्वीयभोजनसम्भवे पाकं विनाऽपि, तदसम्भवे अतिथ्यनुरोधेन पाकसम्भव एव, सायं वैश्वदेव-बलिकर्म्मणी,—इति रघुनन्दनमतमसङ्गतम्। न च स्वीयभोजन-सम्भवे पाकं विनाऽपि,—इत्यस्यां कल्पनायां प्रमाणमस्ति। न चैव,

'पुनः पाकमुपादाय,—इति वचनमुपपद्यते। तस्मात्, पुनः पाकमुपादाय,—इत्यनूद्यते, पाकं सिद्धमन्नम् उपादाय, सायमपि, पुनर्वैश्वदेवं कुर्य्यात्,—इति वा वचनार्थः। यस्तु पुरुषार्थयोरेव सतोर्वैश्वदेवबलिकर्म्मणोर्द्रव्यार्थत्वं प्रतिजानीते। तस्य रात्रौ पाकाभावेऽपि पुरुषार्थयोस्तयोर्यथाकथञ्चिदनुष्ठानमावश्यकमित्यफलः प्रयासः। तस्मादस्मदुक्तैव व्यवस्था शास्त्रार्थः॥ १९॥ ०॥

आह। तदिदं बलिहरणमहरहर्यत् पच्यते तेनैवान्नेन कर्त्तव्यं न पुनरन्यार्थमपि यत् श्रप्यते, तेनापि कर्त्तव्यम्—इत्युच्यते। कस्मात्? 'वैश्वदेवादन्नात् पर्य्युक्ष्य जुहोति'—इति, 'सिद्धस्य वैश्वदेवस्य अन्वहं होतव्यम्'—इति, 'होमशेषेण बलयोहर्त्तव्याः'—इति चैवमादिशास्त्रेभ्यः। नेत्युच्यते। पुरुषार्थं खल्वेवमादिकं कर्म्म, यथाकथञ्चित् पुरुषेण निर्व्वर्त्तनीयम्। अन्यथा खल्वयमधर्म्मम् इयात्। तस्मान्नैष नियमः—वैश्वदेवेनैवान्नेन होतव्यम्—इति। तमिममर्थम् आचार्य्यः सुव्यक्तमुपदिशन्नाह—

**सर्व्वस्य त्वेवान्नस्यैतान् बलीन् हरेत्,—पित्र्यस्य वा, स्वस्त्ययनस्य वा, ऽर्थार्थस्य वा॥ २०॥**

सर्व्वस्यैवान्नस्य एतान् बलीन् हरेत्। यत् किञ्चिदन्नं पच्यते भोजनार्थं वा, अन्यार्थं वा, तेनैव—बलयोहर्त्तव्याः न पुनरन्नस्यास्ति कश्चिन्नियमोऽनेनैवान्नेन— इत्येतदर्थमाचार्य्यः 'सर्व्वस्य'— इत्याह। "अनेकस्य अशेषता सर्व्वशब्दस्य अर्थः"—इति ह्यवोचाम। स खल्वयमर्थोविस्पष्टमुपदिश्यते,—'पित्र्यस्य वा' इति। पित्र्यस्य, पितृ-

कर्म्मार्थं प्टतस्य, अमावस्यादावन्नाद्यार्थ्याद्यर्थम्—इत्यर्थः। स्वस्त्ययनस्य, तदर्थं पक्वस्य। स्वस्ति—इति अभिप्रेतार्थसिद्धिमाचक्ष्महे। तस्या-अयनं प्रापकं यत्कर्म्म, तत् स्वस्त्ययनम्। किन्तत्? ब्राह्मणभोजनादिकम्। कस्मात्? "स्नेहवदमांसमन्नं ब्राह्मणान् भोजयित्वा स्वस्ति हैषां भवति"—इत्येवमादिवचनात्। 'अर्थार्थस्य' अर्थोधनम्, अर्थः प्रयोजनं, यस्य, पुरुषस्य, सोऽयम् अर्थार्थः—इत्युच्यते। यस्मात् पुरुषात् अर्थ आशास्यते, तदर्थं पक्वस्य—इत्यर्थः। वैश्वदेवावशिष्टेन बलिहरणोपदेशात् वैश्वदेवेऽपि सुतरामेषैव व्यवस्था।

अथ पित्राद्यर्थं यत् पच्यते, तेनापि चेत् वैश्वदेवादिकं क्रियते, न तर्हि पाकः पित्र्यो भवति। वैश्वदेवाद्यर्थत्वमपि खल्वस्य विद्यत-एव। उच्यते। सत्यमस्तीदं, यत् पित्रर्थं यत् पच्यते, तेनापि वैश्वदेवादिकं कर्त्तव्यम्—इति। नैतावता पाकस्य पित्र्यत्वमपह्नोतुं शक्यते। कुतः? यतस्तथापि अपणस्य पितृद्देश्यकत्वमस्त्येव—इति, पाकः पित्र्यः—इत्युच्यते। पितृकर्म्म किलोद्दिश्य यत् पच्यते, तत् पित्र्यम्—इति प्रतिजानीमहे। सोऽयं पाकविशेषः पितॄणाम-साधारणः,—इति तथा व्यपदिश्यते। व्यपदेशाः खल्वसाधारणतयैव भवन्ति। प्रत्यक्षं खल्वेतदस्माकम्, यत् क्षितिजलपवनबीजादि-समवधानजन्माऽप्यङ्कुरो व्यपदिश्यते—शाल्यङ्कुरः—इति। कस्मात्? शालिबीजानामसाधारणत्वात्। क्षित्यादिकं खलु साधारणम्—इति, न तेन व्यपदिश्यते। तस्मादुपपन्नमेतत्—'पित्र्यस्य वा स्वस्त्ययनस्य वा अर्थार्थस्य 'वा'—इति।

तदेवं यस्य कस्याप्यर्थं पक्वस्य अन्नस्यैतान् बलीन् हरेत्, न

पुनर्वैश्वदेवार्थपक्कस्यैव—इति एव-शब्दार्थः। तु शब्दो बलिहरणस्य कालविशेषं द्योतयति। कः पुनरसौ कालविशेषः? पूर्वं, पश्चाद्वा—इति ब्रूमः। सोऽयं विभज्य प्रदर्श्यते। तत्र तावत् अर्थार्थं स्वस्त्ययनार्थञ्च यत् पच्यते, तेन पूर्वमेव बलिहरणं भोजनादित्याचक्ष्महे। कस्मात्? 'अकृतस्य नाश्नीयात् न चान्नमाशयेत्'—इति गृह्यान्तरवचनात्। तथा दर्शनाच्च। दृश्यते खल्वादितो बलिहरणं पश्चात् भोजनं वैश्वदेवस्यान्नस्य। तस्मादिहापि तदेव कल्पयितुमुचितम्। न खलु पुरुषोच्छिष्टेनान्नेन बलिहरणम्—इति साध्वी कल्पना भवति। यज्ञावशिष्टान्नभोजनमेव ह्युपदिशन्ति शिष्टाः।

"यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते"।

इति।

"यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्"।

इति चैवमादि। अत एव वैश्वदेवादर्वाक् यदि भिक्षुकः समायाति, तदाऽपि वैश्वदेवार्थमन्नमुद्धृत्य,—पृथक् कृत्वा, तस्मै भिक्षा दातव्या,—इति स्मर्य्यते। न तु भिक्षादानावशेषेण वैश्वदेवः कर्त्तव्यः—इति। तदाह व्यासः।

"अकृते वैश्वदेवे तु भिक्षुके गृहमागते।
उद्धृत्य वैश्वदेवान्नं भिक्षां दत्त्वा विसर्ज्जयेत्"॥

इति। अत्राह। "अगस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः संप्रदित्सां चकार तमिन्द्र एत्य परिदेवयाञ्चक्रे" इति लिङ्गात्।

"निरूप्य हविरन्यस्मा अन्यस्मै न हि हूयते"।

इति वचनाच्च स्वस्त्ययनाद्यर्थं यत् पच्यते, तेन बलिहरणमशास्त्र-

मिति। उच्यते। नासौ दोषः। कस्मात्? निरुप्यहविर्विषयत्वा-ल्लिङ्गवचनयोः। कथं ज्ञायते? कण्ठत एव तथाऽभिधानात्। तस्मादुक्तैव व्यवस्था। पित्रर्थश्चेदन्नं पच्यते, तर्हि पूर्वमेव श्राद्धं, पश्चाद्बलिहरणम्–इति ब्रूमः। तत् कस्य हेतोः? तथैव स्मरणात्। तथा च मनोः स्मरणम्।

"उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्ज्जिताः।
ततो गृहबलिं कुर्य्यादिति धर्म्मो व्यवस्थितः"।

इति। न चेदं गृहबलिपदम्–

"स्वयमेव हरेत् काम्यान् बलीन् यावद्गृहे वसेत्।
आतुरत्वे प्रवासे वा लोपो गृहबलेर्भवेत्"॥

इति गृह्यान्तरदर्शनात् काम्यबलिमात्रपरम्–इति वाच्यम्। तन्मात्रपरत्वे प्रमाणाभावात्। तस्मात् गृहे यो बलिर्दीयते–गृहमेधिना यः क्रियते, सोऽयं गृहबलिरुच्यते। गृहबलिपदस्य काम्यबलिमात्रपरत्वेऽपि, काम्यानां बलीनां श्राद्धोत्तरकालत्वमिदं वचनं शक्नोति विधातुं, न तु नित्यानामेतन्निषेद्धुमपि। ततश्च तेषामपि शास्त्रान्तरात् तथात्वमविरुद्धमेव। तथा च गौतमस्मरणम्।

"पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः।
अकृतं तद्भवेत् श्राद्धं पितॄणां नोपतिष्ठते"।

इति।

"पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः।
अकृतं तद्भवेत् श्राद्धं पितॄणां नोपतिष्ठते"।

इति च स्मृत्यन्तरम्। तथा कार्ष्णाजिनिस्मरणम्।

"यदा श्राद्धं पितृभ्यस्तु कर्त्तुमिच्छति मानवः।
वैश्वदेवं ततः कुर्य्यान्निवृत्ते पितृकर्म्मणि"।

इति। अत्र वैश्वदेवस्य श्राद्धोत्तरत्ववचनात् ततः पराचीनस्य बलेः सुतरां तथात्वम्। तथा मत्स्यपुराणम्।

"निर्वर्त्य प्रणिपत्याथ पर्य्युच्याग्निञ्च धर्म्मवित्।
वैश्वदेवं प्रकुर्वीत नैत्यिकं बलिमेव च"।

इति। अत्र—"नैत्यिकं बलिमेव च"—इत्येवमेव श्राद्धभाष्ये नीलाम्बरोपाध्यायाः पठन्ति। परिशिष्टप्रकाशे नारायणोपाध्यायोऽप्येवमेव पठति। वाचस्पतिमिश्राणामप्ययमेव पाठः। "नैत्यिकं विधिमेव च"—इति क्वचित् पाठः। तत्रापि तथैवार्थः। भविष्यपुराणञ्च।

"कृत्वा श्राद्धं महाबाहो, ब्राह्मणांश्च विसृज्य च।
वैश्वदेवादिकं कर्म्म ततः कुर्य्यान्नराधिप!"।

इति।

"विसर्ज्जयेत् प्रियाण्युक्त्वा प्रणिपत्य च भक्तितः।
आद्वारमनुगच्छेत्तागच्छेत्तानुप्रमोदितः।
ततो नित्यक्रियां कुर्य्याद्भोजयेच्च तथाऽतिथीन्।
नित्यक्रियां पितॄणाञ्च केचिदिच्छन्ति सत्तमाः।
न पितॄणान्तथैवान्ये शेषं पूर्व्ववदाचरेत्।
पृथक् पाकेन वेत्यन्ये केचित् सर्व्वञ्च पूर्व्ववत्"।

इति च मार्कण्डेयपुराणम्। न चैवं नित्यश्राद्धमपि बलिहरणात् पूर्व्वमेव प्राप्नोति—इति वाच्यम्। नित्यपाकस्य पितृपाकत्वा-

भावात् । व्यपदेशाः खल्वसाधारणतया भवन्ति—इत्यवोचाम । वैश्वदेवः—सर्व्वार्थः खल्वसौ पाको भवति । पितृपाकात् समुद्धृत्य,—इति हि स्मरन्ति । सर्व्वासु च स्मृतिषु बलिहरणात् परत एव नित्यश्राद्धमुच्यते । अमीषाञ्च वचनानां पार्व्वणश्राद्धप्रकरणे पाठात् नान्यत्र सन्निवेशः ।

ननु वाक्यं प्रकरणं बाधिष्यते ? नेत्युच्यते । विसर्ज्जयेत्—इति, आद्वारमनुगच्छेत्—इति च, अभिधाय, ततो नित्यक्रियां कुर्य्यात्—इत्याम्नानात् व्यक्तमिदमवगम्यते—विसर्ज्जनमनुगमनञ्चेदमनित्ये यत् क्रियते, तदुच्यते, न तु नित्ये—अहरहः क्रियमाणश्राद्धेऽपि—इति । तदिदं वाक्यं न अहरहः श्राद्धविषयम्—इति सिद्धम् ।

"नित्यश्राद्धे गयाश्राद्धे तीर्थश्राद्धे तथैव च ।
वैश्वदेवं हुनेदादौ ततः श्राद्धं समाचरेत्" ।

इति च स्मरणान्तरम् । अपि च । 'निर्व्वर्त्त्य'—इति, 'कृत्वा श्राद्धम्'—इति, 'विसर्ज्जयेत्—इति च, प्रकृतमेव निर्व्वर्त्तनं, प्रकृतमेव श्राद्धम्, प्रकृतमेव च विसर्ज्जनमर्थोऽवगम्यते । व्यक्तिवचनानां खल्वमीषामग्नेयीन्यायात् सन्निहितव्यक्तिपरतैव न्याय्या—इत्यदोषः । परमार्थतस्तु विश्वदेवहोमात् परतो नित्यश्राद्धविधानात् कोऽयमस्थाने संरम्भ इति न खल्विधिगच्छामि । तस्मात् पूर्व्वं श्राद्धं पश्चाद्बलिहरणम्—इत्यवगन्तव्यम् ।

अत्राह । श्राद्धोत्तरकालन्तु तदर्थतैव पाकस्य न स्यात् । सर्व्वो हि सर्व्वस्य परद्रव्यस्य यावन्मात्रं दत्तम्, तस्यैवेष्टे, नान्यस्य—इति । एवञ्च सति सूत्रारम्भवैयर्थ्यमेव स्यात् । तस्मात् श्राद्धात् पूर्व्वं बलि-

हरणम्'—इति। न—इति ब्रूमः। वाचनिके न्यायानवतारात्। वाचनिकः खल्वयमर्थः—इत्युपपादितम्। तत्किमत्र न्यायः करिष्यति? न हि वचनस्यातिभारो नाम अस्ति। उत्तरकालं नास्ति तदर्थतैव पाकस्य—इत्यपि वर्णनमनुचितमेव। कस्मात्? वचनप्रामाण्यादेव। यस्मात् वचनानि श्राद्धादुत्तरकाले बलिहरणं दर्शयन्ति, तस्मादवगच्छामः—अस्त्युत्तरकालमपि पाकस्य तदर्थत्वम्—इति।

अपि च। कस्मादुत्तरकालमस्य तदर्थता लुप्यते?—इति तावदयं प्रष्टव्यः। प्रयोजनस्य वृत्तत्वात्—इति चेन्न, न ह्यास्मे वृत्तेऽपि वनस्पतेस्तदर्थता लुप्यते। पाकः खल्वयं पितृकर्मोद्दिश्य कृतः—इत्यस्ति पित्रर्थता पाकस्य। न खल्ववशिष्टाकस्य तदर्थत्वाभावः पाकस्य तदर्थत्वमपहर्त्तुं शक्नोति तथा चोक्तम्। "यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम्"—इति। श्राद्धं खल्वधिकृत्य पाकः प्रवृत्तः—इति वृत्तेऽपि श्राद्धे नैतत् अन्यथयितुं शक्यते। यथा खल्वाग्नेयहोमे कृतेऽपि, पुरोडाशस्याग्नेयता न व्याहन्यते—अत एवाग्नेयात् पुरोडाशात् स्विष्टकृदवद्यते, तथेहापि भविष्यति। मीमांसाभाष्यकारेणाप्युक्तं दशमस्य प्रथमे। "यथा शिरसा धारितायाः स्रजः शिरसोऽवतारितायाः देवदत्तीयाऽसाविति कृत्वा शुचिदेशनिधानादिः संस्कार एषितव्यो भवति"—इति।

प्रयोजनं यावन्मात्रेण निर्व्वाह्यते, तावन्मात्रमेव चेत् तदर्थमुच्यते, न तर्हि अन्यार्थपाकात् बलिहरणं सम्भवति। न खल्वेक एव भागः श्राद्धाय च उपादेयो, बलिहरणाय च,—इति समञ्जसं वचनम्। यदि तावत् श्राद्धायोपादीयते, नैव बलिहरणाय भवति,

अथ बलिहरणायोपादीयते, न तर्हि श्राद्धाय भवति,—इत्यशक्यत्वादनुचितम् । अथ 'प्रयोजननिर्व्वाहाय यदुपयुज्यते,—यत् अर्हति प्रयोजनं निर्व्वोढुम्, तदेव तदर्थम्'—इति मन्यते, तर्हि निर्वृत्तेऽपि प्रयोजने, नैव द्रव्यस्य तदर्थत्वमपचीयते । स्वरूपयोग्यतामात्रस्याविशिष्टत्वात्—इति यथोक्त एवार्थः । यच्च—'अकृतस्य नाश्नीयात्'—इति वचनम्, तदेतद्व्यतिरिक्तविषयमवतिष्ठते । तस्मात्—"वैश्वदेवबलिकर्मणी नित्ये श्राद्धात् पूर्व्वमेव कर्त्तव्ये, काम्यन्तु बलिकर्म श्राद्धानन्तरम्"—इत्यसङ्गतं वर्णनम् ।

यदप्याहुः—"पार्व्वणश्राद्धे कर्त्तव्ये साग्निना तर्पणेनैव पञ्चयज्ञान्तर्गतपितृयज्ञस्य निर्वर्त्तितत्वात् न श्राद्धानन्तरं पित्र्यबलिनित्यश्राद्धयोरनुष्ठानं, निरग्निना पार्वणदिनेऽपि तदनन्तरं पित्र्यबलिनित्यश्राद्धे कर्त्तव्ये"—इति । तदप्यसङ्गतम् । पित्र्यबलेर्नित्यत्वात् । चतुर्दश नित्याः—इति सङ्ख्यावचनात् प्रमाणविशेषाभावाच्च । यच्चोक्तम्—

"पितृयज्ञन्तु निर्वर्त्त्य तर्पणाख्यं द्विजोऽग्निमान् ।
पिण्डान्वाहार्य्यकं कुर्य्यात् श्राद्धमिन्दुक्षये सदा" ।

इति मत्स्यपुराणवचनेऽर्थात् प्राप्तस्यापि तर्पणानन्तर्य्यस्य पुनरभिधानात् अन्यः पितृयज्ञो नास्ति—इति । तदपि चिन्त्यम् । आनन्तर्य्याश्रवणात् । क्त्वा हि, पूर्वकालतायां स्मर्य्यते,—इत्यवोचाम । तदिदं वचनं सिद्धवदनूद्य पूर्वकालीनन्तर्पणं, इन्दुक्षये सदा कुर्य्यादन्वाहार्य्यम्—इत्येतद्विधत्ते । न तु तर्पणस्य पूर्वकालतामपि । कस्मात्? वाक्यभेदप्रसङ्गात् । एकं खल्विदं वाक्यम् एवं सति

भिद्येत। अपि च। इदं वचनम्, श्राद्धदिने तर्पणस्यावश्यकत्वमाचष्टे, न त्वन्यत् परिसङ्ख्ष्टे। कथं नाम ? तर्पणं निर्वर्त्त्यैव श्राद्धं कुर्य्यात्, न तु केवलनित्यश्राद्धेनैव पितृयज्ञो निर्वर्त्तते—इति मन्येत। "पितृतर्पणानन्तर्य्यानुवादस्तर्पणपार्वणयोर्मध्ये पितृयज्ञाख्यनित्यश्राद्धव्युदासार्थः"—इति शूलपाणुपाध्यायाः। सर्वथाऽपि न परिसङ्ख्ष्टे। श्रुतहान्यश्रुतकल्पनापत्तेः। तदुक्तम्।

"अन्यार्थश्रूयमाणा च याऽन्यार्थप्रतिषेधिका।
परिसङ्ख्या तु सा ज्ञेया यथा प्रोषितभोजनम्"॥

इति। दोषत्रयं खल्वयम्, यत् श्रुतस्य च उत्सर्गोऽश्रुतस्य च परिकल्पनम्। प्राप्तस्यैवमन्योऽपि पितृयज्ञो बाध्येत! तदिदं दोषत्रयं परिसङ्ख्यायामवर्जनीयमापद्येत! न चैतत् युक्तमभ्युपगन्तुम्। यदि पुनः—परिसङ्ख्यीतापि अन्यं पितृयज्ञं, तदाऽपि श्राद्धात् पूर्वमेव परिसङ्ख्यीत, न तु परस्तादपि। कस्मात्? तर्पणाख्यमेव पितृयज्ञं निर्वर्त्त्य-(न तु बलिहरणादिकमपि कृत्वा—इत्यर्थः)—पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यात्,—इति वचनव्यक्तिसम्भवात्। अस्यां खलु वचनव्यक्तौ अन्योऽपि पितृयज्ञः श्राद्धात्परमर्थादवगम्यते। तस्मादस्मदुक्त एवार्थ आदरणीयः॥२०॥०।

तदिदं बलिहरणम्—

## यज्ञादेव निवर्त्तते॥ २१॥

यज्ञो ज्योतिष्टोमादिः। तस्मात् यज्ञात् हेतोर्निवर्त्तते। यज्ञादिति वा सप्तम्यर्थे व्यत्ययेन विभक्तिः पञ्चमी क्रियते। यज्ञ एव

निवर्त्तते—इत्यर्थः । बलिहरणम—इति च होमादेरपि उपलक्षणम-वोचाम । "तस्मात् दीक्षितो न ददाति, न पचति, न जुहोति"—इ त च ब्राह्मणं भवति । एवशब्देन किमिह व्यवच्छिद्यते ? न किञ्चित् । किमर्थं तर्हि ? होमादीनामावश्यकत्वप्रदर्शनार्थम्—इति ब्रूमः । कथन्नाम ? यज्ञ एव निवर्त्तते न पुनरन्यत्र—आपद्यपि—इत्यर्थः । तेनापद्यपि पञ्चयज्ञानामवश्यकर्त्तव्यत्वमवगम्यते । स्मरन्ति च ।

"आपद्यपि हि कष्टायां पञ्चयज्ञान्न हापयेत् ।
स्वर्गापवर्गयोः प्राप्तिं महायज्ञैः प्रचक्षते" ॥

इति । सोऽयं सामान्यो विधिरपवादविधिभिरुपरुध्यते । न पुनरेतावता कारणेन सपिण्डमरणादावपि कर्त्तव्यतैवामीषाम्—इति भ्रमितव्यम् । कस्मात् ?

"सन्ध्यां पञ्च महायज्ञान् नैत्यिकं स्मृतिकर्म्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया" ॥

इति ।

"पञ्चयज्ञविधानञ्च न कुर्य्यान्मृत्युजन्मनोः" ।

इति चैवमादिस्मरणात् । यज्ञ एव निवृत्तिरिति वचनात् खल्व-शौचादावानुमानिकी कर्त्तव्यताप्रतीतिः, प्रत्यक्षन्तु निषेधशास्त्रम् । भट्टनारायणस्त्वाह—"दीक्षितो न जुहोति,—इति सिद्धे पुनर्वचनं परिसङ्ख्यानार्थम् । कथन्नाम ? यज्ञ एव बलिहरणं निवर्त्तते, नान्यत्रेति । एवञ्चाशौचादावपि सिद्धस्य पाकस्य किञ्चिदन्नं तूष्णीं प्रक्षिप्य अग्नौ जुहुयात् । तच्छेषं बलिं कृत्वा तूष्णीमेव प्रक्षिपेत्"—इति ॥ २१ ॥ ० ॥

**यद्येकस्मिन् काले व्रीहियवौ प्रक्रियेयाताम्, अन्यतरस्य कृत्वा कृतं मन्येत ॥ २२ ॥**

यदि, एकस्मिन्—भोजनकाले; दिवैव वा, रात्रावेव वा,—इत्यर्थः। व्रीहियवौ, व्रीहिश्च यवश्च, तौ व्रीहियवौ। अनयोरुपादानमन्यदपि धान्यादिकमुपलक्षयति। 'प्रक्रियेयाताम्' प्रकर्षेण, भक्तकरम्भपायसशष्कुल्यादिभेदेन—इत्यर्थः। 'क्रियेयातां' कृतौ भवेयाताम्, तर्हि अन्यतरस्य एकतरस्य व्रीहेः यवस्य वा, 'कृत्वा' बलिहरणम्, 'कृतं' 'मन्येत' जानीयात्, न पुनः अन्यस्यापि कर्त्तव्यम्—इत्यर्थः॥ २१ ॥ ० ॥

**यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत, सकृदेवैतद्‌बलितन्त्रं कुर्व्वीत ॥ २३ ॥**

यद्येकस्मिन् काले—इत्युक्तार्थम्। 'पुनः पुनः भूयोभूयः 'अन्न पच्येत', अतिथ्यादिबाहुल्यवशात्, तथापि 'सकृत्' एकवारम्, 'एव' 'एतद्बलितन्त्रं' 'कुर्व्वीत' न प्रतिपचनम् ॥ २३ ॥

**यद्येकस्मिन् कुले बहुधाऽन्नं पच्येत; गृहपतिमहानसादेवैतद्बलितन्त्रं कुर्व्वीत ॥ २४ ॥**

'यदि' 'एकस्मिन् कुले' एकपाकोपजीविनि भ्रात्रादिवर्गे, 'बहुधा अन्नं पच्येत' बहुषु महानसेषु कुतश्चित् कारणात् कदाचित्, भ्रातृपुत्रादीनां भोजनसौकर्य्यार्थं वा, तर्हि, एषां यो गृहपतिः, तस्य, 'महानसात्' 'एव' 'एतद्बलितन्त्रं कुर्व्वीत' न प्रतिमहानसात्—इत्यर्थः। स्मरति च बृहस्पतिः।

"एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेत्, विभक्तानां तदेव स्यात् गृहे गृहे"।

इति। कः कुर्व्वीत ? गृहपतिः—इति ब्रूमः । कस्मात् ? प्रकृतत्वात् । प्रकृतः खल्वत्र गृहपतिः कर्त्ता—इति स एव कुर्व्वीत ॥ २४ ॥ ० ॥

**यस्य त्वेषामग्रतः सिध्येत्, नियुक्तमग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्त्वा भुञ्जीत ॥ २५ ॥**

'एषाम्' एकपाकोपजीविनां, मध्ये, 'यस्य तु' 'अग्रतः' पूर्व्वं, गृहपतिपाकात्, 'सिध्येत्' सिध्यति पाकः, स किञ्चिदन्नम्—'अग्नौ' 'नियुक्त' 'कृत्वा' किञ्चिच्च, 'अग्रं' 'ब्राह्मणाय दत्त्वा भुञ्जीत' । तुशब्दो विशेषणार्थः । किं विशिष्यते ? अनावश्यकत्वेऽपि वैश्वदेवादीनाम्, इदमस्य विशिष्यते,—यदग्नौ नियोज्यं ब्राह्मणाय च दातव्यम्—इति ॥ २५ ॥ * ॥

**यस्यो जघन्यं भुञ्जीतैवेति ॥ २६ ॥**

यस्य पुनर्जघन्यं परस्तात् गृहपतिपाकात् सिध्यति पाकः, स भुञ्जीतैव, न पुनरग्नौ वा नियुञ्जीत, ब्राह्मणाय वा दद्यात्, बलिं वा हरेत्। उ—इति पुनरर्थोऽपार्थो वा निपातः। अन्ये तु पठन्ति—"यः सो जघन्यं भुञ्जीतैव"—इति । तदिदमेवं विव्रियते,—यः जघन्यं भुञ्जीत, स उ भुञ्जीतैव—इति । सो जघन्यम्,—इति छान्दसोऽयं प्रयोगः । 'इतिः' नित्यबलिप्रकरणपरिसमाप्तिं द्योतयति ।

सेयं पञ्चसूत्री द्रव्यस्य कर्म्मार्थतामाह। कर्म्मणश्च पुरुषार्थताम्।

कर्म्मणां द्रव्यार्थत्वे खल्वावर्त्तेत प्रतिद्रव्यं कर्म्म। तदननुजानानः आचार्य्यः पुरुषार्थत्वममीषां दर्शयति। द्रव्यार्थत्वे खल्वमीषां वचनानामदृष्टार्थत्वं कल्पनीयं स्यात्! न चैतदुचितं सम्भवन्त्यां गतौ। तस्मात् यथोक्तएवार्थः ॥ २७॥ * ॥

**अथाप्युदाहरन्ति ॥ २७ ॥**

अथानन्तरञ्च यत् कर्त्तव्यं, तदपि उदाहरन्ति वदन्ति ब्राह्मणवाक्यानि—इत्याभामान्तं सूत्रम्। स्मृतिकाराणां खल्वियं शैली यत् 'तदाहुः' 'तत्रैक आहुः' 'अथो खल्वाहुः' 'अथाप्युदाहरन्ति' इत्येवमादीनि पदानि ब्राह्मणवाक्यानामादौ निपातयन्ति॥ २७॥

**एतस्यैव बलिहरणस्यान्ते कामं प्रब्रुवीत, भवति हैवास्य ॥ २८ ॥**

एतत्—इति बलिहरणं ब्रूमः। 'एतस्य' बलिहरणस्य, 'अन्ते' अवसाने, 'एव'—काम्यानामपि बलीनामनन्तरम्—इत्यर्थः। 'कामं प्रब्रुवीत' काम्यते इति कामः—अभिलसितमायुरादिकमुच्यते। तमिमं काममभिलषितं वस्तु, प्रब्रुवीत प्रकर्षेण कथयेत लाभार्थं, प्रार्थयेदग्निम्—इत्येतत्। "मनो ह वै देवा मनुष्यस्य जानन्ति"—इति श्रवणात् मनसैव इयं प्रार्थना मा भूत्—इति प्रब्रुवीतेत्याह। प्रार्थना च इयं वामदेव्यगानादर्वाक् कर्त्तव्या। तदाह नित्यान् काम्यानपि बलीनभिधाय कात्यायनः।

"स्पृष्ट्वाऽपो वीक्षमाणोऽग्निं कृताञ्जलिपुटस्ततः।
वामदेव्यजपात् पूर्व्वं प्रार्थयेत् द्रविणोदसम्।

आयुरारोग्यमैश्वर्य्यं धीर्धृतिः शं बलं यशः।
ओजोवर्च्चः पशून् वीर्य्यं ब्रह्म ब्राह्मण्यमेवच।
सौभाग्यं कर्म्मसिद्धिञ्च कुलज्यैष्ठ्यं सकर्तृताम्।
सर्व्वमेतत् कर्म्मसाचिन्, द्रविणोद, रिरीहि नः"।

इति। आयुरारोग्यम्—इत्यादिः प्रार्थनमन्त्रः। स खल्वयं प्रार्थितः कामो, 'भवति' निष्पद्यते, 'एव'। 'ह' किल, 'अस्य' प्रार्थयितुरित्यर्थः॥ २८॥

**स्वयन्त्वेवाशस्यꣳ बलिꣳ हरेत् यवेभ्योऽध्याव्रीहिभ्यः, व्रीहिभ्योऽध्यायवेभ्यः, स त्वाशस्यो नाम बलिर्भवति॥ २९॥**

'स्वयं तु एव'। तुशब्दः चशब्दार्थः, समुच्चये। किं समुच्चिनोति? पूर्व्वोक्तं नित्यबलिम्—इति भट्टभाष्यम्। नैतत् युक्तम्। कस्मात्? नित्यबलौ प्रतिनिधिसद्भावात्। आशस्यबलौ च तद्भावात्। समुच्चयपक्षे खल्वाशस्यञ्च बलिं स्वयमेव हरेत्—इति वचनव्यक्तिरवगम्यते। नित्यञ्च—इति चार्थः। तदनया वचनव्यक्त्या आशस्य इव नित्येऽपि बलौ प्रतिनिधिर्निरस्येत। तस्मात्—तुशब्दः सुभूमिकरणादिकं स्मारयति—इति ब्रूमः। कथन्नाम? नित्यबलिवत्—सुभूमिकरणम् उभयतः परिषेकः—इत्येवमादिकया रीत्या—इति। 'आशस्यम्' आशस्यनामानं 'बलिं' 'स्वयम्' 'एव' 'हरेत्' न पुनः प्रवासादावपि अन्येन—इत्यर्थः। उक्तश्चायमर्थः पुरस्तादस्माभिः—'स्वयमेव हरे काम्यान्'—इत्यादिग्रन्थान्तरेण।

कोऽयमाग्रस्यो नाम बलिः ? कस्मै च हर्त्तव्यः ?—इत्यत्राह—'यवेभ्यः'—इति। सेयं चतुर्थी विभक्तिर्यवानां देवतात्वमवगमयति। त्यागोद्देश्यां हि देवतामाचक्षते। चतुर्थ्या खल्वत्र यवानामुद्देश्यत्वमवगम्यते। श्लोकमपि उदाहरन्ति।

"तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन चेष्यते।
देवतासङ्गतिस्तत्र दुर्ब्बलन्तु परम्परम्"।

इति। तस्मात् यवदैवतोऽयं बलिर्भवति। तेन—यवेभ्यो नमः—इति प्रयोगः सिध्यति। कस्मिन् काले हर्त्तव्योऽयं बलिः ? तदुच्यते। 'अधि' उपरि। कस्मात् ? 'यवेभ्यः' यवोत्पत्तेरित्येतत्। तदत्र यवपदाच्चतुर्थ्येव प्रमाणम्।

"अपादानसम्प्रदानकरणाधारकर्म्मणाम्।
कर्त्तुश्चान्योन्यसन्देहे परमेकं प्रवर्त्तते"।

इति शाब्दिकस्मरणात्। यवेभ्य उपरि—इति यथाश्रुतेऽप्यर्थे केवलमभ्युपगम्यमाने, देवताविशेषानुपदेशात् यवदैवत एवायं बलिः कल्पयितुमुचितः। श्रुतत्वात्। तदुत्सर्गे च कारणविशेषाभावात्। अत एव—यवेनैव द्रव्येणैष बलिर्हर्त्तव्यः—इत्यवधार्य्यते। अतएव च—

'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः"।

इति कर्म्मप्रदीपवचनादाज्यद्रव्यकः प्रजापतिदेवताकोऽयं बलिः—इत्यपि नाद्रियते। 'जुहोतिषु'—इत्यभिधानाच्च। तथा च गृह्यान्तरम्।

"यवैर्यवेभ्य आवापो व्रीह्युत्पत्तेरधो बलिः।

व्रीहिभ्यो व्रीहिभिः पूर्व्वं यवोत्पत्तेर्जिजीविषोः"।

इति। कियन्तं कालं यावदयं बलिर्हर्त्तव्यः? तदुच्यते। 'आव्रीहिभ्यः' व्रीह्युत्पत्तिपर्य्यम्—इत्यर्थः। एतेन—'व्रीहिभ्योऽध्यायवेभ्यः'—इति व्याख्यातम्। 'स त्वाग्रस्यो नाम बलिर्भवति'। सः—इति प्रस्तुतपरामर्शिना सर्व्वनाम्ना निरपेक्षं बलिद्वयं परामृश्यते। तुशब्दोऽन्येभ्योबलिभ्योऽस्य वैशेष्यमवगमयति। स्वयमेव खल्वयं बलिर्हर्त्तव्यो लोप एवास्य प्रवासादाविति ह्यवोचाम। स खल्वयं बलिरेकस्मात् शस्यादारभ्य अपरशस्यपर्य्यन्तं कर्त्तव्यत्वात्—'आग्रस्यो नाम' भवति॥ २९॥

तदनेनाग्रस्यबलिना—

## दीर्घायुर्हैव भवति॥ ३०॥

दीर्घम् आयुर्यस्य सोऽयं दीर्घायुः, दीर्घं वा अस्य आयुः, ह किल नूनं भवत्येव। नायमल्पायुर्भवतीत्यर्थः॥ ३०॥

## विश्राणिते फलीकरणानामाचामस्यापामिति बलिं हरेत्, स रौद्रो भवति स रौद्रो भवति॥ ३१॥ *॥

'विश्राणिते' विशेषेण श्राणिते, 'श्रण दाने' इति स्मरणात् दत्ते अन्ने। क्षीणप्राये इत्यर्थः। 'फलीकरणानां' कम्बुकानाम्—इति भट्टभाष्यम्। फलीकरणानि कणाः—इति परिशिष्टप्रकाशः। तथाच गृह्यपरिशिष्टम्।

"आचितं शकटं प्राकुद्रोणः स्यात् कांसमानकः।
कम्बुकास्तु कणास्त्वेव फलीकरणकक्कुशाः"।

इति। 'आचामस्य' भक्तमण्डस्य—

"ओदनाग्रद्रवं प्राहुराचामं हि मनीषिणः"।

इति स्मरणात्। 'अपाम्' उदकस्य। षष्ठीविभक्त्योऽवयवार्थाः। इतिना मिलितमुच्यते, त्रीण्येतान्येकीकृत्येत्यर्थः। 'बलिं हरेत्'— इत्युक्तार्थम्। स खल्वयं बलिः, रौद्रो रुद्रदेवताको भवति। रात्रौ चायं बलिर्दातव्यः। कस्मात्?

"यक्ष्मणे चोदकं दद्यात् यक्ष्मैतत्ते इति ब्रुवन्।

आरोग्यमस्य तेन स्यात्, सायं रौद्रात् यथेप्सितम्"।

इति गृह्यान्तरदर्शनात्। एतस्मात् च गृह्यान्तरात्,—यत् किञ्चत् कामयते, तत् रौद्रबलेः फलमवगच्छामः। 'स रौद्रो भवति स रौद्रो भवति'—इत्यभ्यासो महायज्ञप्रकरणपरिसमाप्तिं द्योतयति। त इमे आग्रस्यप्रभृतयः कौथुमराणायनीयादीनां स्वशाखोक्ताः काम्या बलयो भवन्ति। कात्यायनोऽप्याह। "आग्रस्य प्रभृतयः काम्याः"—इति। सामान्यविहितास्तु काम्याबलयो विष्णुपुराणादौ द्रष्टव्याः॥ ३१॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मज-श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथम-प्रपाठकस्य चतुर्थी खण्डिका॥ ०॥

---

## गोभिलीयगृह्यसूत्रे

प्रथमप्रपाठके पञ्चमी खण्डिका ।

### अथ दर्शपौर्णमासयोः ॥ १ ॥

अथेत्ययमधिकारार्थः । दर्शश्च पौर्णमासश्च,—दर्शपौर्णमासौ । तयोरधिकार इदानीं वर्त्तिष्यते—इति वाक्यशेषः । अथवा, अथशब्दोऽपूर्व्वप्रकरणोपन्यासार्थः पूर्व्वप्रकृतार्थो वा । कथन्नाम? यथा सायंप्रातर्होमवैश्वदेवबलिहरणानि नित्यानि, तथा दर्शपौर्णमासावपि ॥ १ ॥

तत्र तावदुपवासपूर्व्वकत्वाद्दर्शपौर्णमासयोरुपवासव्यवस्थैव प्रथममभिधातव्या । तत्रापि—

"दर्शान्तं पौर्णमासाद्यमेकमेव प्रचक्षते" ।

इति कर्म्मप्रदीपवचनात् पौर्णमासादित्वावगमात्कर्म्मणः पौर्णमास्याः तावत् व्यवस्था उच्यते—

### सन्ध्यां पौर्णमासीमुपवसेत् ॥ २ ॥

रात्र्यह्नोः सन्धिः, सन्ध्या—

"अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः ।
सा च सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः" ।

इति स्मृत्युक्तलक्षणा। सा खल्वियं परैव सन्ध्या गृह्यते—इति वक्ष्यामः। अविशेषात् सन्ध्याद्वयमपि सन्ध्याशब्दार्थः—इति तु भट्टभाष्यम्। तस्यां या पौर्णमास्यवच्छिद्यते;—यस्यां किल पौर्णमास्यां सन्ध्यायामेव—सवितुरस्तमयसमकालमेव पूर्णश्चन्द्रमाः समुदेति, सा पौर्णमासी सन्ध्येत्युच्यते। तामिमां सन्ध्यां पौर्णमासीं प्राप्योपवसेत्—तस्यामुपवासं कुर्य्यादित्यर्थः। उपवासः खल्वयम्,—उपावृत्तस्य पापेभ्यः गुणैः सह वासो वक्ष्यमाणोपवसथानुष्ठानं यथोक्तकालस्याभोजनमुच्यते। न पुनरहोरात्रमभोजनम्। कस्मात्? "औपवसथिकं दम्पती भुञ्जीयाताम्"—इति तदहर्भोजनोपदेशात्।

"उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः सविज्ञेयो न शरीरविशोषणम्"।

इति च स्मरणात्। एके पुनः—"उपास्मिन् श्वो यक्ष्यमाणा देवा वसन्ति एवं विद्वानग्निमुपस्तृणाति"—इति तैत्तिरीयब्राह्मणं पश्यन्तः उपवासोऽग्न्याधानम्"—इति वर्णयन्ति। "पूर्व्वेद्युरग्निं गृह्णाति उत्तरमहर्द्दैवतां यजते"—इत्येवमादिशास्त्रान्तरमप्युदाहरन्ति॥ २॥

## उत्तरामित्येके॥ ३॥

सन्ध्यां पौर्णमासीमनुपोष्य तदुत्तरां पौर्णमासीमुपवसेत्—स्वण्डामपीत्यर्थः। इत्येके आचार्य्या मन्यन्ते।

एवं वा—

उत्तरेति प्रकृतत्वात् पौर्णमास्याः प्रतिपदुच्यते। उत्तरपदं

खल्विदमव्यवहितत्वात् पौर्णमास्यास्तदपेक्षयैव उत्तरत्वमवगमयति, न सन्ध्यामपेक्ष्य, व्यवहितत्वादित्यभिप्रायः। तामिमामुत्तरां प्रतिपदमुपवसेत्—इति, एके अन्ये शाखिनो मन्यन्ते न वयमेवं ब्रूमइत्यर्थः। तथाच रौरकीयाणां ब्राह्मणम्। "द्वे ह वै पौर्णमास्यौ द्वे अमावस्ये,—तस्मात् प्रतिपद्युपवसन् यजेतापरेद्युः"—इति। तस्मात् पारशाखिकोऽयं पक्षः कौथुमराणायनीयादीनां न भवति॥ ३॥

स्थिता तावदपर्य्यवसितैव पौर्णमासीकथा, 'त्रयः पौर्णमासीकाला भवन्ति'—इत्यत्र पुनरुद्भविष्यति। अमावस्यायाः खल्विदानीं व्यवस्थोच्यते—

**अथ यदहश्चन्द्रमा न दृश्येत,ताममावास्याम्॥ ४॥**

अथ उभयत्रामावास्यालाभे यदहर्यस्मिन्नहनि चन्द्रमा न दृश्येत, नावलोक्येत, ताममावास्याम्, उपवसेदित्यनुवर्त्तते। सा खल्वियं कुहूरुच्यते। तत्रैव हि चन्द्रमा न दृश्यते—इति सैवोपवस्तव्या न सिनीवाली। तस्यां खल्ववलोक्यते प्रातः चन्द्रमाः। तस्मान्नात्र क्षयलक्षणा। तदिदं सूत्रं वर्द्धमानाभिप्रायम्। कात्यायनोऽप्याह।

"वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत्"।

इति॥ ४॥ ०॥

कस्याश्चित् पौर्णमास्याः कस्याश्चिच्चामावास्यायाः उपवासव्यवस्थामभिधाय, अथेदानीं दर्शपौर्णमासयोः कश्चिन्नियमः, पौर्णमास्यमावस्ययोश्च स्वरूपं वक्तव्यम्—इत्युत्तरो ग्रन्थ आरभ्यते।

एवं वा—

कस्मात् पुनः कारणात् पौर्णमास्याममावस्यायाञ्च उपवासो-व्यवस्थाप्यते ?—न पुनश्चतुर्दश्यामुपोष्य तयोरेव इज्यते ?—इत्यस्यां जिज्ञासायामिदं सूत्रमारभ्यते—

**पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः ॥ ५ ॥**

पक्षोऽर्द्धमासः। स च शुक्लकृष्णभेदात् द्विविधः। तदन्ता तिथिश्च द्वयी पौर्णमासी अमावस्या च। बहुवचनं व्यक्तिभेदाभिप्रायमावृत्त्यपेक्षम्। तदयमर्थः। पक्षाणामन्ता अवसानतिथय उपवस्तव्याः। पक्षाणामादयः प्रतिपदश्च अभियष्टव्याः आभिमुख्येन पूर्व्वाह्णादिसम्पादनेन यष्टव्याः—इत्यर्थः। अस्मादपि कारणात्—पौर्णमासीमुपवसेत् नोत्तराम्—इत्यवधार्य्यते ॥ ५ ॥

**आमावास्येन हविषा पूर्व्वपक्षमभियजते पौर्णमासेनापरपक्षम् ॥ ६ ॥**

अमावास्यायां यदुपक्लृप्तं हविस्तदामावास्यम्—इत्युच्यते। तेन आमावास्येन हविषा पूर्व्वपक्षं शुक्लपक्षम् अभियजते। पौर्णमासेन पौर्णमास्यामुपक्लृप्तेन हविषा अपरपक्षं कृष्णपक्षम्, अभियजते—इत्यनुषज्यते। पूर्व्वपक्षप्रतिपदिष्ट्या कृत्स्न एव पूर्व्वः पक्षः इष्टो-भवति, अपरपक्षप्रतिपदिष्ट्या च कृत्स्नोऽपरपक्षः—इत्यभिप्रायः। कर्म्मणः पौर्णमासादित्वात् दर्शान्तत्वाच्च पौर्णमास्यां यागार्थं यद्धविरुपक्लृप्तममावस्यायामपि तदेवोपकल्पनीयमित्यनुमन्तव्यम् ॥ ६ ॥

अथ केयं पौर्णमासी ? का वा अमावस्या ? तदुच्यते—

**यः परमो विकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी, यः परमः सङ्कर्षः साऽमावास्या ॥ ७ ॥**

यः परमो महान् विकर्षो विप्रकर्षोव्यवधानं सप्तमराश्यवस्थानम्—इत्येतत्। कयोः ? सूर्य्याचन्द्रमसोः। सूर्य्यश्च चन्द्रमाश्च, तयोः सूर्य्याचन्द्रमसोः। सा पौर्णमासी पूर्णिमा—इत्येकोऽर्थः। सा—इति पौर्णमास्यपेक्षया स्त्रीत्वम्। यः खलु परमः सङ्कर्षः सन्निकर्षः—एकराश्यवच्छेदेनैकांशावस्थानं सूर्य्याचन्द्रमसोः, सा अमावस्या दर्शः सूर्य्येन्दुसङ्गमः—इत्यनर्थान्तरम् ॥ ७ ॥

अवसिता प्रासङ्गिकी कथा। प्रकृतामेवेदानीममावस्याव्यवस्थामनुवर्त्तामहे—

**यदहस्त्वेव चन्द्रमा न दृश्येत,ताममावस्यां कुर्व्वीत ॥ ८ ॥**

यदहश्चन्द्रमा न दृश्येत, न दृश्यते—क्षीयते, आगमबलात् क्षीणः—इत्यवगम्यते; ताममावस्यां कुर्व्वीत। तुशब्दः, चशब्दार्थः समुच्चते। एवशब्दोऽवधारणार्थः। उपवासमन्यच्च यद्विहितम्—"अमावस्यायां तत् श्राद्धम् इतरदन्वाहार्य्यम्"—इति, तदपि तस्यामेव कुर्व्वीत—इत्येवमवध्रियते। तदनेन,—उपवासपिण्डपितृयज्ञान्वाहार्य्यश्राद्धानामेकस्मिन् काले कर्त्तव्यत्वमवगम्यते। अतएव कात्यायनः अमीभिरेव वचनैः श्राद्धमपि व्यवस्थापयाञ्चकार।

तदिदं चीणामावस्याभिप्रायं सूत्रम्। चयश्चात्र लच्यते। अतो नास्ति पौनरुक्त्यम्—'अथ यदहश्चन्द्रमा न दृश्येत ताममावास्याम्'—इत्यनेन सूत्रेण। तत्र खल्ववलोकनाभावोऽर्थः, वर्द्धमानाभिप्रायञ्च वचनम्—इत्यवोचाम। तदाह कात्यायनः।

"पिण्डान्वाहार्य्यकं श्राद्धं चीणे राजनि शस्यते।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः।
यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।
अमावस्या चीयमाणा तदैव श्राद्धमिष्यते।
यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः।
तत्क्षयापेचया ज्ञेयं चीणे राजनि चेत्यपि"।

इति। तथा च श्रूयते। "अपराह्णे ददाति, तस्मिन् चीणे ददाति"—इति। "एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः, स एतां रात्रिं चीयते, तस्मिन् चीणे ददाति"—इति च शातपथीये ब्राह्मणे।

या च श्रुतिः—"यदहस्त्वेव चन्द्रमादर्शनं नैति,ताममावस्यां कुर्व्वीत"—इति, "यदैवैष न पुरस्तान्न पश्चाद्दृशे, अथैभ्यो ददाति"—इति चैवं जातीयिका, सा तु दर्शनाभावपरैव, न चयपरा। श्रुतिः खल्वेवमत्यन्तमुत्सृज्येत। "श्रुतिलचणाविषये च श्रुतिर्ज्यायसी"—इत्याचचते। शतपथादिब्राह्मणेषु च, चीयते—इति, चीणे—इति चैवमादिसमाम्नानात् चयमात्रमर्थः, न पुनरदर्शनमपि। तथाविधवचनव्यक्तेरभावात्। तदनयोर्विभिन्नविषययोर्वचनयोर्नास्त्येकविषयत्वम्। तस्मात्तामीषां वचनानामेकवाक्यता।

न खल्वेकवाक्यत्वानुरोधात् श्रुतिरुत्स्रष्टुं युज्यते, लक्षणा वा आश्रयितुम् । श्रुतिर्हि वाक्याद्बलीयसी, कथमिव वाक्यानुरोधादुत्सृज्येत ! तस्मात्—शतपथश्रुतिदर्शनादपराऽपि श्रुतिः क्षयपरा—इति वाचस्पतिमिश्रादिवर्णनमसङ्गतम् ।

सा खल्वियमपरा श्रुतिर्वर्द्धमानाऽभिप्राया—इत्यवधार्य्यते । कुतः ? परिशिष्टकारस्मरणात् । स हि वर्द्धमानायामपरेऽहनि श्राद्धं स्मरति । अतएव, आचार्य्यस्य सूत्रद्वयमुपपद्यते,—'अथ यदहश्चन्द्रमा न दृश्येत'—इति, 'यदहस्त्वेव चन्द्रमा न दृश्येत'—इति च । इतरथा श्रुतीनामेकवाक्यतायामपि, आचार्य्यस्य सूत्रद्वयं नोपपद्यते । न खलु सर्व्वत्र क्षयलक्षणायां कश्चिदपि विशेषः शक्यते दर्शयितुम् । वर्द्धमानायामपि चैवमनुपपत्तिः । सर्व्वत्र क्षयलक्षणायां खल्वनुपपत्तिर्वर्द्धमानायां परदिने श्राद्धकरणस्य । कस्मात् ? अमावस्याष्टमे यामे क्षयाभावात् । प्रत्यक्षश्रुतिविरोधेन च स्मार्त्तायाः श्रुतेरनुमानासम्भवात् ।

यः पुनरेवं समाधानं ब्रूते,—'यदुक्तं यदहस्त्वेव'—इत्यनया स्मृत्या श्रुतौ लक्षणावर्णना न सम्भवति, स्मृतिमपेक्ष्य श्रुतेर्बलवत्त्वात्'—इति । सोऽपि नातीव समीचीनमाह । कुतः ? यतो भवेदेतदेवं नाम, यदि स्मृतिविरोधपरिहाराय श्रुतौ लक्षणा अभ्युपगम्येत । न तु तथा अभ्युपगम्यते । श्रुतिरियमनया स्मृत्या व्याख्यायते—इति कृत्वा त्वियं वर्णना स्यात् । न खल्वेवमियं श्रुत्या विरुध्यते; येन अप्रमाणं स्यात् । श्रुत्या विरुध्यमाणा स्मृतिरप्रमाणम्—इति ह्याचक्षते, न श्रुतिव्याख्यानपराऽपि । तस्मात् यथा

श्रुतिव्याख्यानपराणाम्—"अभ्युत्थ कालभेदे दोषवचनात्"—इति, "चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः"—इति, "वचनात्त्व-यथार्थमैन्द्री स्यात्"—इति चैवमादिकानामक्षपादवादरायण-जैमिनीयानां सूत्राणां नाप्रामाण्यम्, एवमिहापि भवितुमुचितम्। कथमन्यथा कात्यायनवचनादाचार्य्यसूत्रेऽपि लक्षणा स्यात्, तस्य तदुपजीव्यत्वात्। अतएव भगवतो व्यासस्य स्मरणम्।

"वेदार्थो यः समाख्यातस्तत्राज्ञानं भवेद् यदि।
ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम्"।

इति। न चात्र, यदा चतुर्दशीयामम्,—इत्यत्र श्रुतिविरोध-परिहाराय श्रुतौ लक्षणा इति नारायणोपाध्यायादिदिशा भ्रमि-तव्यम्। अदर्शनवत् क्षयस्यापि श्रौतत्वाविशेषात्। तस्मादस्मदुक्त-मेव समाधानमादरणीयम्। क्षयश्च कात्यायनेन दर्शितः।

"अष्टमांशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावस्याऽष्टमांशे च ततः किल भवेदणुः"।

इति। 'ततः'—इति अमावस्याष्टमयामे क्षयाभावं दर्शयति। क्षयानन्तरम्—इति तस्यार्थः। अन्यथा तत्पदवैयर्थ्यात्—इति रामकृष्णोपाध्यायाः। अमावस्याष्टमांशे च,—इति चस्त्वर्थः, व्यव-स्थाऽर्थको वा। अमावस्यायाः सप्तममंशं यावत् क्षयः, अष्टमे चांशे उत्पत्तिर्व्यवस्थाप्यते। तस्मात्—अणुकालोऽपि क्षयकाल एव—इत्य-सङ्गतं वर्णनम्। यच्च—'ततः'—इत्यत्र, 'पुनर्'—इति पठितं नारायणोपाध्यायेन। तदप्यनुचितम्। सर्व्वेष्वेव ग्रन्थेषु 'ततः'—इति पाठस्यैव दर्शनात्। शूलपाणिप्रभृतिभिः प्रामाणिकतरैश्च तथैव

पठितत्वात् । किं बहुना? तन्मतमनुजानानोऽपि वाचस्पतिमिश्रः, 'ततः'—इत्येव पठति । नापि 'पुनर्'—इति पाठ आञ्जस्येन सङ्गच्छते। कुतः ? उच्यते । पुनः किल भवेदणुः—इत्यस्य खल्व-यमर्थः अवगम्यते—अमावस्याष्टमांशे पुनरपि—चतुर्दश्यष्टमयामवदेव अणुर्भवेत्—इति । पुनःशब्दस्वरसात् । सोऽपि एवमेव व्याचष्टे । स खल्वयमर्थः, नातीव समञ्जसः । कस्मात् ? एवं खल्वणुपदस्य लक्षणा स्यात् । वाक्यार्थश्च नोपपद्यते । कथम्? यदि तावदणुपदं द्व्यणुकाभिप्रायं, तर्हि स्फुटमेतस्य चतुर्दश्यन्तयामवैलक्षण्यम् । पुनः शब्दस्य खल्वेवं पीड्यते । अथ मतम्—चतुर्दश्यष्टमे यामे चन्द्रमसो-यावन्तोऽवयवाः शिष्यन्ते, तदभिप्रायकमणुपदम्, तथाच यादृश-मणुत्वं चतुर्दशीशेषयामे तादृशमत्रापि—इति । एवन्तर्हि अणुपदस्य लक्षणा स्यात् । न ह्यत्र लक्षणाकारणमस्ति । न चैवमपि वाक्यार्थ-उपपद्यते। किं कारणम्? चतुर्दश्यष्टमे यामे किल चन्द्रमाश्चतुर्थ-भागोनकलावशिष्टो भवति, अमावस्यासप्तमयामे च कृत्स्नं क्षीयते ।

"अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्नमेवं ज्योतिश्चक्रविदोवदन्ति" ।

इति विशेषाभिधानस्वरसात् । चतुर्दश्यष्टमयामे तावत् यथा-वदवस्थितस्य चन्द्रमसोऽवयवापचयादेवं वाक्यार्थः सङ्गच्छते । अमावश्यष्टमयामे तु नैवम् । न हि सप्तमयामे निरवशेषेण क्षीणस्य अणुमात्रावशेषस्य चन्द्रमसो जातुचिदपि अष्टमयामे अवयवा-पचयाच्चदुर्थभागोनकलावशिष्टता सम्भवति । अपि तु अवयवोपच-यादेव—इत्यकामेनापि वाच्यम् । तथाच—उपचीयमानावयवस्य

चन्द्रमसः चतुर्थभागोनकलावशेषः—इति न शक्यते वक्तुम्। कुतः? अवशेषपदार्थासङ्गतेः। भिन्नौ खल्विमावर्थौ,—यस्मात्स्थितस्य चन्द्रमसोऽवयवापचयाच्चतुर्थभागोनकलावशेषः, यच्चाणुमात्रावशेषस्यावयवोपचयात् चतुर्थभागोनकलत्वम्,—इति धीमद्भिरवधेयम्। एतेन,—इदमपि वर्णनमसङ्गतमेव;—'अक्षतत्वचयस्तुरीयोनकलाऽवशिष्टता, सा च चतुर्दशीशेषयामे भवति, क्षतत्वचयस्तु सप्तमे अमावस्यायामे अष्टमे च पुनस्तुरीयोनकलावशेषः'—इति।

तस्मात् 'पुनः किल भवेदणुः'—इति पाठेऽपि पुनःशब्दः पश्चादन्तरार्थो वर्णनीयः। तेन चयात् पश्चादन्तरमिदमुच्यते,—अणुर्भवेत् उत्पद्यते,—इति वचनव्यक्तिरादरणीया। अतएव,—'अमावस्याष्टमांशे अणुर्भवति पुनरुत्पद्यते' इति तत्त्वकारादिभिर्व्याख्यातम्। अतः,—इदमपि वर्णनमनादरणीयम्;—'अमावस्याष्टमयामे परमाणुमात्रं तिष्ठति, द्व्यणुकारम्भस्तु प्रतिपद्येव'—इति। भवेत्—इति च प्रमादपाठः खल्वेवं स्यात्।

अपि च। पुनः किल भवेदणुः—इत्यस्य परेषां वर्णनायामपि उत्पत्तिकाल एव अमावस्याष्टमांशः स्यात्। न चयकालः। कस्मात्? असाधारणत्वात्। उत्पत्तिः खल्वष्टमांशे असाधारणी। सा ह्यत्रोपदिश्यते। न चयः। व्यपदेशास्तु असाधारणतयैव भवन्ति,—इत्यवोचाम। 'क्षीणे ददाति'—इत्येतस्य च असाधारण एव चयोऽर्थः। कुतः? शीघ्रमुपस्थितेः। साधारणासाधारणयोः खल्वसाधारणमेव शीघ्रमागच्छति हृदयम्। आगच्छति चेत्, न युज्यते विनाकारणमुत्स्रष्टुम्। अतएव,—"दृष्टिपूर्व्वकमेवादः

पौर्णमासं हविः"—इत्यग्निषोमीयः पुरोडाश एवोत्कृष्यते, न पुनरुपांशुयाजीयमाज्यमग्निषोमीयानग्निषोमीयसाधारणम् — इति सिद्धान्तः। अपिच। अमावस्यायाः चयस्य व्यभिचाराभावे, न जातुचिदपि,—'यदहस्त्वेव चन्द्रमा न दृश्येतताममावस्याम्'—इति अमावस्यां चयेण व्यशेच्यत्। व्यशिषच्चाचार्य्यः,—तस्मादनुमिमीमहे :—व्यभिचरत्यमावस्या चयम्—इति।

इदमिदानीं सन्दिह्यते। यदा पूर्व्वस्याममावस्यायामुपवासः क्रियते, तदा परदिने पश्वादियागः किं पूर्व्वाह्ण एव अमावस्यायामपि कर्त्तव्यः?—आहोस्विदपराह्णेऽपि प्रतिपद्येव?—इति। पूर्व्वाह्ण एव दर्शेऽपि,—इति तावत् प्रतिपद्यामहे। कुतः? "अथ पूर्व्वाह्ण एव प्रातराहुतिं हुत्वाऽग्रेणाग्निं परिक्रम्य"—इति वक्ष्यमाणसूत्रात्। पूर्व्वाह्ण एव—इति—सूत्रयन्नाचार्य्योऽन्तरेणापि प्रतिपदं पूर्व्वाह्ण एव यागं दर्शयति—अमावस्यायामपि। अन्यथा, 'प्रागावर्त्तनादह्नः'—इति सूचितत्वादनुवादापत्तेः। स खलु अप्रवृत्तिविशेषकरोऽनर्थकः—इत्यवोचाम। अपराह्णेऽपि प्रतिपद्येव,—इति च प्रतिपद्यामहे। कस्मात्? "पश्वान्ता उपवस्तव्याः पश्वाद्योऽभियष्टव्याः"—इति सूत्रणात्। सोऽयं तुल्यवद्विकल्पः,—इति भट्टनारायणोपाध्यायाः। तदेतत् कात्यायनः स्पष्टयाञ्चकार।

"पश्वादावेव कुर्व्वीत सदा पश्वादिकं चरुम्।
पूर्व्वाह्ण एव कुर्व्वीत विद्धेऽप्यन्ये मनीषिणः"।

इति। सदापदमुभाभ्यामन्वेति। कथन्नाम? सदा, सर्व्वस्मिन्नेव पश्वादौ विद्धेऽपि, आपराह्णिकेऽपि वा,—इत्यर्थः। सदा, सर्व्वस्मिन्नेव

पूर्व्वाह्णे, सदर्शेऽपि,—इत्यर्थः। तदिदमुक्तं,—'विद्भेऽप्यन्ये मणीषिणः'—इति। अत्रान्यग्रहणं क्रियते,—अन्येषामाचार्य्याणामिदं मतम्—(न पुनरस्मत्कल्पितम्)—इत्यन्यानाचार्य्यान् पूजयितुं, नात्मीयं मतं पर्य्युदसितुम्। 'अन्येऽपि मनीषिणः'—इति वा वचनव्यक्तिरादरणीया। 'सदा' पदाद्वा नित्यस्यैव पचादिचरोरयं कालविकल्पः,—इत्ययमर्थोऽवगन्तव्यः। तदत्र, 'पचादावेव कुर्व्वीत'—इति, 'पूर्व्वाह्ण एव कुर्व्वीत'—इति च निरपेक्षसमाम्नानात्, "खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति"—इति "यवैर्यजेत, व्रीहिभिर्यजेत"—इति चैवमादिवद्विकल्प एव स्फुटमवगम्यते। स्वेन स्वेन पदसमूहेन खल्वत्र वाक्यद्वयं पृथक् पृथगेव परिपूर्णं, तस्माद्विस्पष्टमर्थद्वयं, विभागे च न साकाङ्क्षम्—इति; "हस्तौ अवनेनिक्ते, उपलराजिं स्तृणाति"—इत्येतयोरिव नास्त्यनयोरपि परस्परं सम्बन्धः। तथाचोक्तम्। "वाक्यानाञ्च समाप्तत्वात्"—इति, "समेषु वाक्यभेदः स्यात्"—इति, "एकार्थास्तु विकल्पेरन्"—इति च। 'यस्मिंस्तु साधनोपकारे कार्य्ये, तस्मिन्नेव उपकारे अन्यत् साधनं विधीयते, तत्र विकल्पः'—इति च शास्त्रतात्पर्य्यविदां समयः। अत्र खल्वेकस्मिन् होमे साधनतया द्वौ कालौ विहितौ,—पचादावेव—इति, पूर्व्वाह्ण एव,—इति च।

"स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति"।

इति च स्मरणम्। एवकारद्वयेन च प्रत्येकमवधारयन्नेकैकशः करणमुपदिशति। कुर्व्वीत,—इति च क्रियाभ्यासस्तावन्मात्रे करणार्थः। यत्र चोभयमेव सम्पद्यते, तत्राप्यन्यतरोपादानमवर्ज्जनीयमेव। एकै-

क्रमः अनुगुणानामुदगयनादीनामिव वा, समुदितोपलब्धौ महान् अभ्युदयोवाच्यः ।

" ऋग्भ्यां दाभ्यां तिल-व्रीहि-यव-गोधूम-कल्पितम् ।
हविः प्रजुहुयात्तच्च वासरानेकविंशतिम् " ।

इत्यस्याञ्च स्मृतौ,—सति सम्भवे तिलादीनां समुच्चयः, असति विकल्पः,—इति विश्वेश्वरभट्टैर्व्याख्यातम् । तद्वदत्रापि वा, सम्भवासम्भवाभ्यां समुच्चयविकल्पौ आदरणीयौ । अतएव,—"यत् पितृभ्यः पूर्वेद्युः करोति, पितृभ्यस्तैतत् यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुते"—इति, "पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवतां यजते"—इति चैवमाद्याः श्रुतयोऽनुगृह्यन्ते । अन्यथा, उपवासश्राद्धयोरेकदिनत्वनियमात्; पूर्वस्यामामावस्यायां तदवधारणात्; उत्तरदिने यागमकृत्वा, तत्परदिने प्रतिपदि तत्करणे, श्रुतय उपरुध्येरन् ।

न चाहःपदं तिथिपरम्—इति तृतीयेऽपि दिने प्रतिपदि यागे श्रुतीनामुपरोधो नास्ति,—इति वाच्यम् । 'अथ यदहश्चन्द्रमा न दृश्येत ताममावास्याम्'—इत्येवमादिसूत्रणात् सावनस्यैवाह्नोऽवगतेः । 'यज्ञादौ सावनो मतः' इति च स्मरणात् । अपि च । 'यदहस्त्वेव'—इत्येवमादिभिः सूत्रैरुपवासकालं सूत्रयित्वा, 'अथ यदहरुपवसथो भवति'—इत्यादिभिः प्रातरुपवसथमभिधाय, 'अथापराह्न एव'—इत्यादिभिस्तस्मिन्नेव दिने दम्पत्योर्भोजनमुक्त्वा, 'तौ खलु जाग्रन्मिश्रावेव'—इत्यादिना तत्रैव जागरणं विधाय, 'अथ पूर्वाह्न एव प्रातराहुतिं हुत्वा' इत्यनेन, अथानन्तरदिने

प्रातराहुतिहोमानन्तरमेव यागस्य सूत्रणात् पूर्वापरसावनदिनत्वमेव उपवासपश्चादियागयोः पर्य्यवस्यति। 'पूर्वेद्युः पितृभ्यो निष्क्रीय प्रातर्देवेभ्यः प्रतनुते'—इतीयञ्च श्रुतिः सावनाभिप्रायैव स्फुटमवगम्यते। कुतः ? प्रातर्—इति वचनात्। अत्र प्रातरिति वचनाच्च प्रातरेव यागः प्रतिपद्भावेऽपि,—इति प्रतीयते।

नापि तृतीयदिने यागः कर्त्तुम् उचितः। तत्र हि द्वितीयाविद्धतया प्रतिपदः, चन्द्रमसो दर्शनप्रसङ्गः। स खल्वनिष्ट एव। तथाच गृह्यान्तरम्।

"यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्यात् द्विजातये"।

इति। "एषा वै समत्वा नामेष्टिः"—इति च ब्राह्मणम्। वर्द्धमानायां पुनरनन्यगतेर्व्वचनात् नैष दोषः। तदिदमुक्तं,—'विद्धेऽप्यन्ये'—इति।

"सन्धिश्चेदपराह्णे स्यात् यागः प्रातः परेऽहनि।
कुर्व्वाणः प्रतिपद्भागे तुरीयेऽपि न दुष्यति"।

इति च गृह्यपरिभाषादौ स्मृत्यन्तरम्। अत्र 'पादः प्रातः'—इति केनचित् पठितम्। तदनाकरम्।

न चाहःपदस्य तिथिपरतायामपि नियमेन पूर्वापरदिनत्वमुपपद्यते श्राद्धपश्चादियागयोः। चतुर्दश्यामपि श्राद्धविधानात्। न खल्वेतदन्यत्र इयं श्रुतिरित्यत्र किञ्चित् प्रमाणमस्ति। 'प्रतिपद्युवसन् यजेतापरेद्युः'—इत्यस्यामपि श्रुतौ, प्रतिपद्युवसन्—इति श्रूयते, न प्रतिपदि यजेत—इति। श्रुतिः खल्वेवमत्यन्तमुत्सृष्टा भवति। न

च वाक्यानुरोधात् श्रुतिरुत्स्रष्टुं युज्यते। "यदर्थस्याभिधानं शब्दस्य श्रवणमात्रादेवावगम्यते, स श्रुत्याऽवगम्यते"—इति हि पदवाक्यप्रमाणकुशला मन्यन्ते। शब्दश्रवणमात्राच्चायमर्थोऽवगम्यते,—प्रतिपद्युपवसन्निति। अन्यस्तु—प्रतिपदि यजेत,—इति पुरुषबुद्धिकल्पितः। यथा खल्वेकस्माद्वाक्यादाख्यातपदमन्यस्माच्च नामपदं गृहीत्वा योऽवाक्यार्थः सम्पद्यते पुरुषकल्पनामूलः, तादृशो ह्ययमर्थो भवति,—अपरेद्युः प्रतिपदि यजेत,—इति। तस्मादयुक्तः स आश्रयितुम्। अतएव,—'द्वे ह वै पौर्णमास्यौ, द्वे अमावस्ये',—इति पौर्णमास्यमावस्ययोर्द्वित्वमुच्यते। तदनेन प्रतिपदोऽमावस्यात्वं पौर्णमासीत्वञ्चातिदिश्यते,—इति प्रतिपद्युपवास एव अनया श्रुत्या विधीयते,—इति प्रतिपद्यामहे। नाम्नाऽपि धर्मातिदेशस्य सप्तमाध्याये सिद्धान्तितत्वात्। अथ मतं,—प्रतिपदि यागेऽपि, अमावस्यायां यजेत, पौर्णमास्याञ्च,—इत्युपपत्तये तस्याः पौर्णमास्यादित्वमतिदिश्यते? तर्हि अमावस्यायामपि यागोऽनेनैव नयेन अवगम्यते,—इत्यस्मत्पक्ष एवानुगृह्यते।

स खल्वयं प्रतिपद्युपवासोऽन्येषामनुमतो नास्माकम्,—इति आचार्य्येणैव उक्तम्,—'उत्तरामित्येके'—इति। अतएव, एकेषामनुमतामुत्तरां दर्शयितुं तत्रैव सूत्रे, 'प्रतिपद्युपवसन्'—इतीमां श्रुतिं तत्रभवान् भट्टनारायण उदाजहार। अपिच। परेषामेवैषा श्रुतिर्नास्माकम्। रौरुकीयाः खल्वेवमामनन्ति, न अस्मच्छाखिनः। तस्मादिमामवष्टभ्य नास्मच्छास्त्रमन्यथयितुमुचितम्।

"पूर्वाह्ने मध्यमे वापि यदि पर्व समाप्यते।

तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते।
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते"।

इति च स्मृतिर्मध्यमेऽपि भागे पर्वसमाप्तौ तद्दिने यागमभिदधाना अस्मदुक्तमेव अर्थमनुगृह्णाति। न चात्रान्या गतिः सम्भवति, मध्यम-भागपर्य्यन्ते पर्वसमाप्तावपि पूर्वेद्युरेवोपवासस्यावश्यम्भावात्। तदत्र पूर्ववाक्यं चीणाभिप्रायम्, उत्तरवाक्यञ्च वर्द्धमानाभिप्रायं प्रत्येतव्यम्। यदपि—

"आवर्त्तने यदा सन्धिस्ततः पूर्वमथापि वा।
तस्मिन्नहनि यष्टव्यं परतश्चेत् परेऽहनि"।

इति स्मरणम्। तत्र, आवर्त्तनम् अह्नो मध्यभागः,—इति तिथ्याभट्टोक्तमादरणीयम्। आवर्त्यते यत्र भागे, तदावर्त्तनम्,—इति व्युत्पत्तेः सम्भवात्, वचनान्तरसंवादाच्च। न ह्यावर्त्तनपर्य्यन्ते—इत्यस्यां कल्पनायां किञ्चित् कारणमस्ति। एकत्रैव वचने,—आवर्त्तने, ततः पूर्वं वा,—इत्युपादानाच्च नायमर्थः शक्यते वक्तुम्। तस्मादस्या-अपि स्मृतेः पूर्वोक्तस्मृतिसमानविषयतैव अवगन्तव्या। वचनस्य यथा-श्रुतार्थपरतायामपि, आवर्त्तनकालेऽपि सन्धौ तदहर्यागमुपदिशन्ती स्मृतिरस्मन्मतमेव अनुगृह्णातीति ध्येयम्। तदत्रापि तथासम्भवं चीणावर्द्धमानाभिप्रायता वर्णनीया। साधारणाश्च स्मृतयः, असाधारणवचनानामनुपरोधेन नेतव्याः। परमार्थतस्तु प्रायेण विभिन्नशाखिविषयाणि वचनानि भवन्ति। नैतेषामविरोध-सम्पादनप्रयासेनावश्यं मनः खेदयितव्यम्। पर्वणः सन्धिश्च यदि

पर्वणस्तुरीयो भागः, तदा व्यक्तमसन्दर्णनैव आभिरुपदिश्यते-इत्यनुसन्धेयम् ।

वाचस्पतिमिश्रास्तु,—"हरिहरपद्धत्यादौ तु विशेषः। तथा हि, श्राद्धेष्ट्योस्तावदव्यवधानेन पूर्वापराह्णानुष्ठेयत्वं,—'पूर्वेद्युः पितृभ्यो-निष्क्रीय प्रातर्देवेभ्यः प्रतनुते'—इति श्रुतेः। लोगाक्षिरपि,—

"पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते।
अपराह्णेऽथ सायाह्ने यदि पर्व समाप्यते।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते"।

समाप्यते प्राप्यते। पर्व अमावस्या। उपोष्य औपवसथं विधाय। तेनापराह्णगामिन्याममावस्यायां श्राद्धमौपवसथञ्च विधाय तदुत्तराह्णे मध्याह्नाभ्यन्तरे इष्टिः,—इति वर्त्तुलार्थः। एवञ्च वर्द्धमानावत् सर्वत्रैवोत्तरापराह्ण एव साग्निना श्राद्धं कार्य्यम्"—इति परेषां विशेषमुपन्यस्य,—"एतन्मते चीयमाणपदस्य उत्तरापराह्णव्यापित्वमर्थः। खर्वितापदस्यापि स्तम्भिताया उत्तरापराह्णव्यापने प्रथमायाः प्रतिषेधोऽर्थः, तदव्यापने तु विधिरिति व्यवस्थितविकल्पः"—इति वर्णयाम्बभूवुः। तदत्र भगवन्तो भूमिदेवाः प्रमाणम्। परमत्र मते व्यक्तमुत्तरदिने अमावस्यायामपि इष्टिरवगम्यते। ये तु—चीणादौ पूर्वस्याममावस्यायां श्राद्धम्, इष्टिञ्च पूर्वाह्णे प्रतिपद्येव वदन्ति, तेषामुपवासतृतीयदिवसे वा यागः स्यात्। श्राद्धोपवासयोः समानदिनत्वं वा न स्यात्। श्रुतीनां स्मृतीनाञ्च बह्वीनाम् उपरोधोऽवर्जनीयः स्यात्। तदत्र तएव प्रष्टव्याः॥ ८॥ ०॥

यस्माच्चतुर्दश्यामपि चन्द्रमाः क्षीयते, तस्मात्—

दृश्यमानेऽप्येकदा गताध्वा भवतीति ॥ ९ ॥

दृश्यमानेऽपि चन्द्रे। तदिदं चतुर्दशीमभिप्रेत्य वचनम्। अस्यापि खल्वमावस्याविषयत्वे पूर्वेणैव सूत्रेण शिनीवाल्याविधानादर्थतएव तत्र प्रातश्चन्द्रमसोदर्शनस्य प्राप्तत्वादनुवादापत्तेः। एकदा—एकस्मिन् काले। यदा खलु विप्रकृष्टायाममावस्यायामपेक्ष्यमाणायां सन्ध्या-समीपमुहूर्त्तं स्यात्, तदैव, न सर्वदा—इत्यर्थः। 'गताध्वा' गतः प्राप्तः देवपितृलोकप्रापणाय अध्वा अनया, सेयं गताध्वा प्रशस्ता, 'भवति' चतुर्दश्यपि। तदाह कात्यायनः।

"यथोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया।
अमावस्यां प्रतीक्षेत तदन्ते वापि निर्वपेत्"।

इति। 'इतिः' अमावस्याव्यवस्थोपसंहारार्थः। अत्र किञ्चिद्वक्त-व्यमस्ति। तत्र तावत् 'अष्टमांशे चतुर्दश्याः'–इत्यादिना चन्द्रमसः क्षयमभिधायाह कात्यायनः।

"आग्रहायण्यमावस्या तथा ज्यैष्ठस्य या भवेत्।
विशेषमाभ्यां ब्रुवते चन्द्रचारविदोजनाः।
अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते
चतुर्थभागोनकलाऽवशिष्टः।
तदन्त एव क्षयमेति कृत्स्न-
मेवं ज्योतिश्चक्रविदो वदन्ति।
यस्मिन्नब्दे द्वादशैकस्य यत्र-

तस्मिंस्तृतीयया परिदृश्यो नोपजायते ।
एवं चारं चन्द्रमसोविदित्वा
चीणे तस्मिन्नपराह्णे च दद्यात्" ।

इति । तदस्माद्विशेषाभिधानात् मार्गशीर्षज्यैष्ठयोश्चतुर्दश्यष्टमयामे न श्राद्धम् । तत्र चन्द्रचयाभावात् । किन्त्वमावस्यायामेव । पूर्व्वदिने त्वमावस्याया अलाभे परदिनेऽपि श्राद्धम् । अनन्यगतेर्वचनात् । पूर्व्वत्र वासरहतीयांशे अमावस्याया अलाभेन संशयाभावात् । परत्र चन्द्रचयलाभाच्च । उभयदिने चन्द्रचयलाभे तु पूर्व्वदिन एव । "यदा चतुर्दशीयामं"—इति वचनात् । न ह्यनेन विशेषाभिधानेन तदपोद्यते । किन्तु चन्द्रचयस्यैव विशेषोऽभिधीयते।

यच्चोक्तं तत्त्वकारेण ! 'मार्गशीर्षज्यैष्ठयोरुभयदिने चन्द्रचयलाभे यद्यपि यदा चतुर्दशीयाममिति वचनात् पूर्व्वदिन एव श्राद्धं प्राप्नोति, तथापि तद्वचनं चन्द्रचयानुरोधमूलमिति कृत्स्नचयानुरोधात् चीणायामपि परत्रापराह्णलाभे श्राद्धम् । अन्यथैतद्विशेषाभिधानं व्यर्थं स्यात्'—इति । तदसङ्गतम् । कृत्स्नचयानुरोधे प्रमाणाभावात् । ननु मा भूत् प्रमाणं, विशेषाभिधानस्यार्थवत्त्वार्थं कृत्स्नचयानुरोधः कल्प्यते इति चेत् । नैषा साध्वी कल्पना । विशेषाभिधानस्यार्थवत्त्वस्य पूर्व्वमेव दर्शितत्वात् । तस्मात् कपोलकल्पितेन कृत्स्नचयानुरोधेन वचनस्योपरोधः सर्व्वथैवासङ्गतः । वचनस्य चन्द्रचयानुरोधमूलत्वेऽपि कृत्स्नचयानुरोधमूलत्वे न प्रमाणम् । तथात्वे वा मासान्तरेऽपि पूर्व्वदिने श्राद्धं न स्यात् । कृत्स्नचयाभावात् ।

इदमप्यपरमिह विवेचनीयम् । दिनद्वयसंबन्धिन्यमावस्या तावत्

त्रिविधा सम्भवति; परदिने पूर्व्वदिवसीयचतुर्द्दश्यपेक्षया न्यून-कालव्यापिनी, समकालव्यापिनी, अधिककालव्यापिनी च। तत्राद्या क्षीणा, द्वितीया स्तम्भिता, तृतीया वर्द्धमानेत्युच्यते। तत्राचार्य्येण चन्द्रमसः क्षयादर्शनाभ्यामुपवासादिकं व्यवस्थापितम्। कात्यायनस्तु क्षीणायां चन्द्रक्षये वर्द्धमानायाञ्च चन्द्रादर्शने श्राद्धमुक्तम्। एवञ्च क्षीणायां चन्द्रमसः क्षयो वर्द्धमानायाञ्च तस्यादर्शनं नियामकं सम्पद्यते। स्तम्भितायामाचार्य्येण विशेषानुपदेशात् चन्द्रमसः क्षया-दर्शनयोरनुरोधाच्च पूर्व्वत्र परत्र वा करणमिति विकल्पएवाचार्य्य-स्याभिप्रेत इत्यवधार्य्यते। तथाच कर्म्मप्रदीपे कात्यायनः।

"संमिश्रा या चतुर्द्दश्या अमावस्या भवेत् क्वचित्।
खर्व्वितां तां विदुः केचिद्गताध्वामिति चापरे"।

इति। केचित् यजुर्व्वेदिनः। अपरे ऋग्वेदिनः। तदत्र छन्दोग-परिशिष्टकृता छन्दोगानां व्यवस्थामनभिधाय यजुर्व्वेदिनां ऋग्वे-दिनाञ्च व्यवस्थामभिदधता छन्दोगानामिच्छाविकल्प एवाभिप्रेयते इत्यवगम्यते। इतरथा स्वपेक्षितमनभिदधतोऽनपेक्षितञ्च ब्रुवतो-ऽसंबन्धप्रलापित्वमनवधेयवचनत्वञ्च तस्यापद्यते। न चैतत् सम्भवति। स्फुटमाह लघुहारीतः।

"त्रिमुहूर्त्तोऽपि कर्त्तव्या पूर्व्वा दर्शा च बहृचैः।
कुहूरध्वर्य्युभिः कार्य्या यथेष्टं सामगीतिभिः"।

इति। तस्मात् संमिश्रा येति वचनं क्षीणायाः पूर्व्वमुक्तत्वात् वर्द्धमानायास्र वक्ष्यमाणत्वात् स्तम्भिताविषयमितितत्त्वकारोक्तमादर-णीयम्। वचनमिदमुभयत्रामावस्याप्राप्तौ कुत्र श्राद्धं कर्त्तव्यमिति

संशयप्रदर्शनार्थम् इति वाचस्पतिमिश्रादिमतन्तु न युक्तम् । वचनारम्भवैयर्थ्यात् । क्षीणावर्द्धमानयोर्मध्ये संशयप्रदर्शनस्यानुचितत्वाच्च ।

इदमप्यपरमिह विवेचनीयम् । क्षीणायां यदि पूर्व्वदिने न व्याप्नोत्यमावस्या पौराणिकमपराह्णं व्याप्नोति च परदिने, तदापि पूर्व्वदिने एव त्रिमुहूर्त्तव्यापिन्यामुपवासः श्राद्धञ्च कर्त्तव्यम् । तत्रैव चन्द्रक्षयलाभात् । क्षीणायां पूर्व्वत्रैव करणस्योपदेशाच्च । नातिसन्ध्यासमीपतः,— इति सन्ध्यासमीपमुहूर्त्तमात्रस्यैवात्राननुज्ञानेन सामान्यविषयस्य मुहूर्त्तत्रयाननुज्ञानस्यैतदितरविषयत्वात् । परदिने चन्द्रक्षयालाभेनात्राप्यापद्विशेषाच्च । 'त्रिमुहूर्त्ताऽपि कर्त्तव्या'—इति दर्शनाच्च । यत्र च पूर्व्वदिने सन्ध्यासमीपमुहूर्त्तमात्रे अमावस्या, तत्रापि मार्गशीर्षज्यैष्ठयोरितरत्र पूर्व्वदिन एव चतुर्द्दश्यां कर्त्तव्यं न परत्रामावस्यायामपि । क्षीणायां पूर्व्वत्रैव करणोपदेशात् । चतुर्द्दश्यामपि श्राद्धविधानाच्च । 'अमावस्यां प्रतीक्षेत'—इति च यत्रैव दिने चतुर्द्दश्यां करणमुपदिश्यते तत्रैवामावस्याप्रतीक्षा सम्भवन्ती अनूद्यते न तु विधीयते । वाक्यभेदप्रसङ्गात् । न ह्येकमेव वाक्यमुभयं विधातुं शक्नोति । अमावस्यायाश्च प्रतीक्षां चतुर्द्दश्याञ्च निर्व्वापम् । क्षीणायां खल्वमावस्यायां पूर्व्वत्रैव करणमवगतम् । तदनेन नापोद्यते । किन्तु तत्रैव प्रथमं अमावस्या प्रतीक्षणीया, तदसम्भवे च तत्रैव चतुर्द्दश्यन्ते निर्वप्तव्यम्,—इत्येतदत्रोच्यते । न पुनरपरस्मिन्नपि दिने अमावस्याप्रतीक्षा वचनार्थः । दिनान्तरस्यानुपस्थितेः । प्रत्यासत्त्या अमावस्याप्रतीक्षा-चतुर्द्दश्यन्तनिर्व्वापयोरेकस्मिन्नेवाह्नि सम्भवासम्भवाभ्यामवगतेश्च । तदिदं वचनं अमावस्यायां

प्राप्तायामप्यविशेषाच्चतुर्द्दश्यां करणं निरस्यति । अतएव, 'तत् किं अमावस्यावच्चतुर्द्दशी, इत्यत आह । अमावस्यां प्रतीक्षेत । उभय-तिथेः प्राप्तौ श्राद्धायामावस्या प्रतीक्षणीया'—इति तत्त्वकारेणापि वर्णितम् । "यदा विप्रकृष्टत्वादमावस्यायाः प्रतीक्षणे सन्ध्यासमीपं स्यात्, तदा अमावस्यां न प्रतीक्षेत अन्यदा प्रतीक्षेत" इति वर्णयद्भि-र्भट्टनारायणोपाध्यायैरपि अयमेवार्थोभङ्ग्यन्तरेण प्रतिपादितः ।

एवन्तर्हि चतुर्द्दशीतुरीययामानुपूरणवचनमनर्थकम् । नैष दोषः । तस्यार्थवत्त्वोपपत्तेः । चतुर्द्दशीतुरीययामस्य अमावस्याया वा अपराह्णसम्बन्धः खल्वनया भङ्ग्या प्रतिपाद्यते । तत्र हि चन्द्रमाः क्षीयते । सोऽयमस्यार्थः । यदा अमावस्या क्षीयमाणा तदा श्राद्धम्, इत्येतावन्मात्रोक्तौ च न ज्ञायते पूर्व्वस्मिन् वा अह्नि श्राद्धमिदं स्यात् अपरस्मिन् वा,—इति । तदिदं पूर्वस्मिन्नेवाह्नि कर्त्तव्यम्,—इति प्रतिपिपादयिषया च तुरीयं चतुर्द्दशीयाम् अनुपूरयेदिति वचनमर्थवद्भवति । तस्माच्चतुर्द्दशीतुरीययामानु-पूरणवचनात् परदिनमात्रे पौराणिकापराह्णे अमावस्यालाभे परत्रैव करणमिति निर्व्वासना वर्णना ।

किञ्च उभयत्र पौराणिकापराह्णेऽमावस्याया अलाभे चैतस्मादेव वचनात् पूर्व्वत्र करणस्य भवतोऽपि सम्मतत्वात् तत्र खल्वस्ति तुरीययामानुपूरणमित्यकामेनापि वाच्यम् । तत्र चेदस्ति, अत्र नास्तीति न शक्यते वक्तुम् । न ह्यत्र परदिने पौराणिकापराह्ण-लाभालाभयोः कश्चिदुपयोगोऽस्ति । येन परदिनमात्रे पौराणि-कापराह्णलाभे पूर्व्वत्र पौराणिकापराह्णात् परतः प्रवृत्तायाः अमा-

वास्थाया नास्ति तुरीययामानुपूरणमस्ति पुनरुत्तरत्र तदलाभे इत्युच्येत। तस्मादुभयत्रैव तुरीययामानुपूरणमस्तीत्यास्थेयम्।

अनुस्त्वाच लक्षणार्थः। स खल्वविशिष्ट एव। प्रत्युत लक्षणार्थकानुपदोपादानात् चतुर्द्दशीतुरीययामं लक्षीकृत्याप्यायामप्यमावस्यायां पूर्व्वत्र करणमवगम्यते। अन्यथा तुरीयं यामं पूरयेदित्येतावन्मात्रेऽप्युक्ते, 'ह्रसन्तु व्यापिनी चेत् स्यात्' इति वत् भवन्मतेऽपि मुहूर्त्तमात्रस्यैव पूरणं प्रतीयेत। किमित्यनुपदं प्रयुक्तवान्। तस्मादनुपदस्यास्मदुक्तएवार्थे तात्पर्य्यमवधेयम्। एतेन पूरयेदित्युक्ते तुरीययामव्यापकत्वं प्रतीयते। अतएवानुपूरयेदित्युक्तम्। तथाच अनु लक्ष्यीकृत्य पूरयेदित्यर्थः। अनुपूरयेदिति मुख्यापराह्णमम्बन्धीति यावत् इति। तुरीयमनुपूरयेदित्यपराह्णप्राप्त्युपलक्षणार्थम् इति चैवमादि यदृच्छावर्णनमपि निरस्तं वेदितव्यम्।

तस्मात् "यदा चतुर्द्दश्येव पूर्व्वं दिनं समाप्यते तदा क्षीयमाणापक्षेऽपि अमावस्यायामपराह्णे तदुत्तरदिने श्राद्धम् अनुपूरयेदित्यभिधानात्। प्रकृते च पूर्व्वदिने तुरीययामानुपूरणाभावात्"--इति वाचस्पतिमिश्रवर्णनमादरणीयम्। ननु खलु भोः। यदिदं तुरीयमनुपूरयेदितिवचनमनुकूलं युष्माकं प्रतिकूलञ्चास्माकमिति मन्यसे, तदिदमनुकूलमस्माकं प्रतिकूलञ्च युष्माकं सम्पन्नमित्यहो प्रमादः।

अतएवाचार्य्यः 'यदहस्त्वेव चन्द्रमा न दृश्येतताममावस्याम्' इत्यमावस्यां क्षयविशिष्टां सूचयित्वा तदसम्भवे 'दृश्यमानेऽप्येकदा' इति चतुर्द्दशीमेव क्षयविशिष्टां सूचयाञ्चकार। तस्मात् परदिनेऽप्यपराह्णे अमावस्याया अलाभे चतुर्द्दशीविधानमित्यसङ्गता कल्पना।

प्रमाणाभावाच्च। क्षीणापचय चन्द्रक्षयानुरोधमूलक इति तावन्नि-र्व्विवादम्। कुतः ? चन्द्रक्षयचन्द्रादर्शनयोराचार्य्योक्तयोः क्षीणा-वर्द्धमानापचयोः परिश्लिष्टरूपता निवेशितत्वात्। चन्द्रक्षयस्य क्षीणापचे कथञ्चित् सामान्यसम्भवाच्च। एतच्च चन्द्रक्षयावबद्धं क्षीणापचम्,—इति, यद्वा चतुर्द्दशीयाममिति वचनं चन्द्रक्षयानुरोधमूलम्,—इति चैवमादिकमसकृद्वदता तत्त्वकारेणापि स्वहस्तितम्। चतुर्द्दश्येव पूर्व्वदिनस्य परिसमाप्तौ परदिने चन्द्रादर्शने करणन्तु अनन्यगते-र्व्वचनात्। न चैतत् श्रुत्या विरुध्यते इति शक्यते वक्तुम्। क्षयवद-दर्शनस्यापि श्रौतत्वाविशेषात्। सन्निवेशस्तु स्मार्त्तः स्मृतिमनुसरतीति न किञ्चिदनुचितम्। 'कालश्चन्द्रक्षयात्मकः'—इति सामान्यस्मरण-मपि तुरीयमनुपूरयेदितिविशेषशास्त्रानुसारेण वर्णनीयम्।

अतएव पौराणिकापराह्णोऽपि नात्रानुरुध्यते। एवं खलु पुनरपि सामान्यमेव शास्त्रमनुसृत्य अस्मच्छास्त्रमुपरुध्येत। पौरा-णिकापराह्णस्य च क्षीणादिपञ्चत्रितयसाधारणस्य क्षीणापचमात्र-निवेशवतश्चन्द्रक्षयाद्दुर्व्बलत्वमप्यस्त्येव। लब्धितायाश्च परदिने पौरा-णिकापराह्णमप्युपेक्ष्य पूर्व्वदिने त्रिमुहूर्त्तायामपि करणं स्वयमेव वर्णितम्। परमार्थतस्तु वासरतृतीयांशे श्राद्धविधानान्नात्र पौरा-णिकापराह्णस्यात्यन्तमनुरोधोऽस्ति। वासरतृतीयांशपदोपादानेन पौराणिकापराह्णस्य कियतोऽंशस्य परित्यागात् तदतिरिक्तस्य कियतोऽंशस्याभ्यनुज्ञानाच्च। चन्द्रमसि क्षीणेऽपराह्णे च दद्यात्,—इत्युपसंहारोऽपि स्वोक्तचन्द्रक्षयवत् स्वोक्तवासरतृतीयांशरूपापराह्ण-परतयैव सुतरामुपपद्यते। न पुनः परोक्तापराह्णपरतया। उप-

क्रमोपसंहारयोः समानविषयत्वानुरोधात्। अतावपि श्रौतएवा-पराह्णोवर्णयितुमुचितः। स च वासरतृतीयांशरूपएव। अतावपि श्रौतमपराह्णमुपेक्ष्य पौराणिकमपराह्णं वर्णयन्तोन न्यायेन सङ्गच्छन्ते। पौराणिकापराह्णस्य पूर्व्वत्रापि न विशिष्यते। परममावस्था तत्र नास्तीत्येतावानेव विशेषः। किञ्चातः, क्षीणपक्षे स्वल्पमावस्याया-मात्यन्तमपेक्षेति निवेदितमस्माभिः। अतएव दर्शनिमित्तं चन्द्र-क्षयः कालः इति स्मरणम्। श्रुतिरपि क्षयापराह्णयोः श्राद्ध-मभिदधाना नातीवामावस्याया अत्रादर इति दर्शयति। "अमा-वस्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इतीयञ्च श्रुतिरमा-वस्यायां पिण्डपितृयज्ञस्य करणं विधत्ते न चतुर्द्दश्यां निषेधति। ततश्चास्मात् पराचीनस्यान्वाहार्य्यस्य चतुर्द्दश्यां करणोपदेशादय-मपि तत्रापकर्षव्यः। "तिष्ठन्तं पशुं प्रयजति"—इति प्रयोजापकर्ष तदन्तकर्म्मापकर्षवत्।

पूर्व्वापरीभावश्चानयोः,

"पितृयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम्" ॥

इति मन्वादिभिरन्वाहार्य्यस्य पिण्डपितृयज्ञात् पराचीनत्व-स्मरणात्।

"अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते"।

इति गृह्यान्तरे चान्वाहार्य्यस्य द्वितीयत्वकीर्त्तनस्मरणात् पिण्ड-पितृयज्ञस्य प्राथम्यावगमात्। एतेन,

"न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः"।

इति मनुवचनमपि व्याख्यातम् । अन्ये तु "पिण्डपितृयज्ञ-श्चन्द्रादर्शने" इति कातीयं कल्पसूत्रमवलोकयन्तः श्रौतममावास्या-पदं चन्द्रक्षयपरमिति वर्णयन्ति । नैमित्तिकं स्मार्त्तं वा काला-न्तरमिदम् । अतो न प्रत्यक्षश्रुतिविरोधेन तदन्ते वापि निर्व्वपे-दिति स्मृतेरप्रामाण्यमाशङ्कनीयमित्यपरे मन्यन्ते ।

न चात्र केवलं वयमेव पर्य्यनुयोक्तव्याः । कदाचिच्चतुर्द्दश्यां करणस्य भवतोऽपि सम्मतत्वात् । तत्राप्येतस्य पर्य्यनुयोगस्याविशे-षात् । भट्टनारायणोपाध्यायास्तु 'गताध्वा भवति' इति पृथगेव सूत्रं मन्यमाना इदानीं चतुर्द्दशीं प्रति अमावस्यानामसम्पत्तिरने-नोच्यते इति वर्णयाम्बभूवुः । तदेतत्तत एवोपलक्ष्यम् । अस्मिंस्तु नये नास्त्यनुपपत्तिलेशोऽपि । चतुर्दश्या अमावस्यानामतया तदतिक्रमस्य वक्तुमशक्यत्वादित्यवधेयम् । अतएव 'राजनि क्षीणे वासरतृतीयांशे श्राद्धम्' इति, 'चन्द्रमसि क्षीणेऽपराह्णे च दद्यात्' इति चोपक्रमे उपसंहारे चामावस्यामनभिधाय क्षयापराह्णयोरेव क्षीणपक्षे श्राद्धमुक्तम् । अतएव, यदा अमावस्या क्षीयमाणा तदैव श्राद्धम्, इत्युक्तं, न तस्यामेवेति । तदैव पूर्व्वदिन एवेति च तत्त्वकारेणैव वर्णितम् । अतएव, परदिनमात्रे पौराणिकापराह्णे-ऽमावस्यालाभे परत्रैव करणमित्यपि कदाचिदाशङ्का स्यात् कस्य-चिन्मन्दमतेः, सापि माभूदित्येतदर्थं तदैवेत्येवकारः सुतरामुप-पद्यते । खण्डान्तरव्युदासमात्रन्तु नातीव प्रयोजनम् । अन्तरे-णाप्येवकारमेतस्यानपायात् । अतएव, स्तम्भिता-वर्द्धमानयोर्व्विशिष्य अमावस्यापरिकीर्त्तनमिति धीमद्भिरनुचिन्तनीयम् ॥ ८ ॥

अवसिता अमावस्याकथा। अपर्य्यवसितामिदानीं पौर्णमासीकथामनुवर्त्तामहे।—

**त्रयः पौर्णमासीकाला भवन्ति; सन्ध्या वाऽस्तमितोदिता वोच्चैर्वा॥ १०॥**

त्रयः त्रिसङ्ख्याकाः, त्रिप्रकारकाः,—इति यावत्। पौर्णमास्य एव कालाः पौर्णमासीकालाः भवन्ति। ते खल्विमे विभज्य प्रदर्श्यन्ते। सन्ध्या वा। सन्ध्या तावदुक्तलक्षणा। सा वा। अस्तमितोदिता वा। अस्तमिते उदितो यस्यां,—यस्यां किल पौर्णमास्यामस्तमिते सवितरि पूर्णश्चन्द्रमाः समुदेति, सेयमस्तमितोदिता। सा वा। उच्चैर्वा। यस्याम् उच्चैः स्थिते,—कलाहीने समुदिते चन्द्रमसि, पश्चात् सवितुरस्तमयः स्यात्, सेयम् उच्चैः पौर्णमासीत्युच्यते। सा वा। इयं किल चतुर्दशीमिश्रा भवति। पुराणेऽपि इत्थमेव पौर्णमासीप्रकाराः व्युत्पादिताः। तथाचोक्तम्।

"राका चानुमती चैव द्विविधा पूर्णिमा मता।
पूर्व्वोदितकलाहीने पौर्णमास्या निशाकरे॥
पूर्णिमाऽनुमती ज्ञेया पश्चास्तमितभास्करे।
यस्मात्तामनुमन्यन्ते देवताः पितृभिः सह॥
तस्मादनुमती नाम पूर्णिमा प्रथमा स्मृता।
यदा चास्तमिते सूर्य्ये पूर्णचन्द्रस्य चोद्गमः॥
युगपत्, सोत्तरा रागात्तदाऽनुमतिपूर्णिमा।

राकान्तामनुमन्यन्ते देवताः पितृभिः सह ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयोऽब्रुवन्" ॥

इति । पश्चास्तमित—इति छान्दसः प्रयोगः । कलाहीने निशाकरे पूर्व्वमुदिते सति, यत्र भास्करोऽस्तमेति, सेयमनुमती नाम पूर्णिमोच्यते । इयमेव, 'उच्चैः'—इति सूचिता । अस्तमिते सूर्य्ये पूर्णचन्द्रस्योद्गमः, युगपच्च सूर्य्यस्यास्तमयः पूर्णचन्द्रस्योद्गमश्च,—इति द्वयी राका भवति । अत्राद्या,—अस्तमितोदिता, द्वितीया सन्ध्येत्यस्मदीयं दर्शनम् । एतस्मात् लिङ्गात्,—सन्ध्या पौर्णमासी अपि, अस्तमयसन्ध्यासम्बन्धिनी गृह्यते, न पुनरुदयसन्ध्यासम्बन्धिन्यपि,—इति युक्तम् । सेयमभिद्यमानेऽप्यर्थे भिन्नयोराचार्य्ययोर्विभिन्ना रीतिरित्यनवद्यम् ॥ १० ॥

उच्चैः पौर्णमासी तावच्चतुर्दशीमिश्रा सुतरामुभयदिनगामिनी भवति, कतरा पुनरत्रोपोष्या ? तत्राह ।

## अथ यदहः पूर्णो भवति ॥ ११ ॥

अथेत्यनन्तरायामुच्चैः पौर्णमास्यामेष विधिरिति दर्शयति । 'अथशब्दः सूत्रभेदप्रज्ञापनार्थः । अन्यथा पूर्व्वेण सूत्रेणास्यैकसूत्रता स्यात्,—उच्चैर्व्वा यदहः पूर्णो भवति'—इत्येके वर्णयन्ति । यदह-र्यस्मिन्नहनि पूर्णः सकलकलोपचयादखण्डमण्डलश्चन्द्रमाः भवति, तामुपवसेत्—इत्यर्थः ॥ ११ ॥

कदा पुनश्चन्द्रमाः सकलकलोपचयादखण्डमण्डलो भवति ? कः खलु ज्ञानोपायोऽस्यार्थस्य ?—इत्यस्यामाकाङ्क्षायामुच्यते,—

**पृथगेवैतस्य ज्ञानस्याध्यायो भवति, अधीयीत वा तद्विज्ञो वा पर्व्वागमयेत ॥ १२ ॥**

पृथगन्य एव, एतस्य पूर्व्वविवेचितस्य ज्ञानस्य, उपायभूतोऽध्यायः अधीयते—इत्यध्यायो ग्रन्थो भवति। तञ्च ग्रन्थम्, अधीयीत वा—स्वयं वा पठेत्, तं विवेचितज्ञानोपायं ग्रन्थं ये विदन्ति,—त इमे तद्विदो ज्योतिःशास्त्रविद उच्यन्ते। तेभ्यः सकाशात् वा पर्व्व दर्शपौर्णमासाख्यम् आगमयेत सम्यग् जानीयात्। कस्मिन् काले चन्द्रमाः चीयते?—तदपि ज्ञानं ज्योतिःशास्त्रसापेक्षमेव,—इत्यभिप्रायः। तत्र चयकालः कात्यायनेनैव ज्योतिःशास्त्रादाहृत्य दर्शितः। पूर्णताकालः परमस्माभिर्वक्तुमवशिष्यते। पञ्चदश्यां पञ्चदशे मुहूर्त्ते किल चन्द्रमाः सकलकलोपचयादखण्डमण्डलो भवति,—इति ज्योतिःशास्त्रविदः कथयन्ति। श्लोकमपि उदाहरन्ति।

"पञ्चदश्यां पञ्चदशे मुहूर्त्ते चन्द्रमण्डलम्।
यथा भवति, तद्वत्त्वं सदा भव, नृपोत्तम!"।

इति। केनचित् ज्योतिःशास्त्रकुशलेन कश्चिद्राजा खल्वेवमुपश्लोकितः।

"राकामध्यगतश्चन्द्रः पूर्ण इत्यभिधीयते"।

इति च स्मरन्ति। कालवशात् पुनरेतस्यान्यथात्वं जातम्। युगपरिवृत्त्या किल कालभेदो गणितागतवस्तुषु भवति,—इति ज्योतिर्विदो वदन्ति। अतएव, ततः पराचीनेन ज्योतिःशास्त्रविदा भास्कराचार्य्येण सिद्धान्तशिरोमणावुक्तम्।

" कक्षाचतुर्थस्तरणेर्हि चन्द्रः
कर्णान्तरे तिर्य्यगिनोयतोऽञ्जात् ।
पादोनषट्काष्ठलवांतरेऽतो-
दलं नृदृश्यस्य दलस्य शुक्लम् " ।

इति ॥ १२ ॥ ० ॥

**अथ यदहरुपवसथो भवति, तदहः पूर्व्वाह्ण एव प्रातराहुतिं हुत्वैतदग्नेः स्थण्डिलं गोमयेन समन्तं पर्य्युपलिम्पति ॥ १३ ॥**

अथेति पूर्व्वप्रकृतार्थम् । पूर्व्वप्रकृते यस्मिन्नहनि उपवसथो भवति, तदहस्तस्मिन्नहनि प्रातराहुतिं हुत्वा, पूर्व्वाह्ण एव, अग्नेरेतदधिकृतं स्थण्डिलम्, एतस्य अधिकृतस्याग्नेर्व्वा स्थण्डिलम् अभ्यगारम्, गोमयेन गोशकृता गोमयोदकेनेत्येतत् । समन्तं चतुरस्रं परि सर्व्वतोभावेनोपलिम्पति । एतदिति रसवतीनिरासार्थम् । तत् खल्वस्य द्वितीयमभ्यागारम् । स्थण्डिलग्रहणं लौहादिभाण्डस्थे अग्नौ होमनिषेधार्थम् । पूर्व्वाह्ण एव उपलिम्पति,—इति सम्बन्धात् एवकाराच्च पूर्व्वाह्ण एव उपवसथं दर्शयति चतुर्द्दश्यामपि । अन्यथा, प्रागावर्त्तनादिति सिद्धत्वादनुवादापत्तेः । अतएव पूर्व्वाह्ण- एव प्रातराहुतिं हुत्वा,—इत्यपि न वर्ण्यते ।

सिद्धायामपि प्रातराहुतौ, प्रातराहुतिं हुत्वा,—इति वचन- मौपवसथिके अहनि स्वयं होमकरणसूचनार्थम् । कथन्नाम ? हुत्वा पर्य्युपलेप्तव्यम्—इति पर्य्युपलेपनहोमयोरेकः कर्त्ताऽवगम्यते ।

किमर्थं पुनरत्र स्वयं होमकरणं नियम्यते? फलविशेषार्थमित्याह। अत्र हि स्वयं होमे कृते सर्व्वदैव स्वयं कृतो भवति। भवति चात्र ब्राह्मणम्। "एते ह वै रात्री सर्व्वारात्रयः समवयन्ति; या आपूर्य्यमाणपक्षस्य रात्रयः ताः सर्व्वाः पौर्णमासीं समवयन्ति, या अपक्षीयमाणपक्षस्य रात्रयस्ताः सर्व्वा अमावस्यां समवयन्ति, स योऽहैवं विद्वान् स्वयमुपवसथं जुहोति, सर्व्वदा हैवास्य स्वयं कृतं भवति"—इति ॥ १३ ॥ ० ॥

**अथेध्मानुपकल्पयते; खादिरान् वा, पालाशान् वा ॥ १४ ॥**

अथानन्तरं, स्रौयागार्थमिध्मान्,—

"प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम् ।
एवंविधाः स्युरेवेह समिधः सर्व्वकर्म्मसु ।
समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिम्"।

इति कर्म्मप्रदीपोक्तलक्षणसंख्याकान्। बहुवचनमावृत्त्यपेक्षम्। उपकल्पयते, उप समीपे अग्नेरित्यर्थात्, कल्पयते आसादयतीत्यर्थः। इध्मान् विशिनष्टि,—खादिरान् खदिरमयान् वा, पालाशान् पलाशमयान् वा। खदिरपलाशौ प्रसिद्धौ। वाशब्दद्वयन्तुल्यवद्विकल्पार्थम्। ते खल्विमे इध्माः यत्र न कर्त्तव्याः, तदप्याह कर्म्मप्रदीपः।

"अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्म्मसु।
येषाञ्चैतदुपर्य्युक्तं तेषु तत्सदृशेषु च।

अक्षभङ्गादिविपदि जलहोमादिकर्म्मणि ।
सोमाकृतिषु सर्व्वासु नैतेष्विध्मो विधीयते" ।

इति। अस्यायमर्थः। विवाहादिकर्म्माङ्गभूता ये होमास्ते अङ्गहोमाः—इत्युच्यन्ते। येऽपि समिद्धविध्मास्तन्त्रहोमाः। द्विविधाः किल होमाः याज्ञिकसम्प्रदायप्रसिद्धाः,—चिप्रहोमास्तन्त्रहोमाश्च,—इति। तत्र ये चिप्रं हूयन्ते,—तदिमे सायंप्रातर्होमादयोऽनङ्गविस्तारयुक्ताः चिप्रहोमा उच्यन्ते। ये तु परिसमूहनबर्हिराद्यङ्गविस्तारयुक्ताः, तदिमे तन्त्रस्येतिकर्त्तव्यताया यथोक्तायाः संबन्धात् तन्त्रहोमा उच्यन्ते। यश्च आसन्नप्रसवायाः सुखप्रसवार्थं सोष्यन्तीहोमः। येषाञ्च सायंप्रातर्वैश्वदेवहोमानाम्, उपरि पश्चात्, एतत् इध्माख्यं द्रव्यम्, उक्तम् आम्नातम्। तेष्वेतेषु तत्सदृशेष्वन्येषु च चिप्रहोमेषु। यः किल ऊढायां यानेन पत्या नीयमानायामक्षभङ्गनद्धविमोक्षादिविपदि नैमित्तिको होमो विहितः। यश्च,—"पौर्णमास्यां रात्रावविदासिनि ह्रदे नाभिमात्रमवगाह्याक्षततण्डुलानृगन्तेष्वास्येन जुहुयात् स्वाहेत्युदके"—इति काम्योजलहोमः, आदिपदात् यश्च पदवर्त्महोमः, याश्च सोमरसाकृतयः, तेषु एतषु सर्व्वेषु होमेषु इध्मो न विधीयते,—इति ॥ १४ ॥ ० ॥

खादिरपालाशालाभे, विभीदकतिल्वकबाधकनीवनिम्बराजवृक्षशाल्मल्यरलुदधित्थकोविदारश्लेष्मातकवर्जꣳ सर्ववनस्पतीनामिध्मोयथार्थꣳ स्यात् ॥ १५ ॥

खादिरपालाशयोरलाभे असम्भवे, विभीदकादिवर्ज्जमन्येषां

सर्वेषां वनस्पतीनामश्वत्थप्रभृतीनाम्, इध्मो, यथार्थम्, अर्थं प्रयोजनम् अनतिक्रम्य, स्यात्—आसादनीयो भवेत्। तदलाभे,—इत्यनभिधाय, खादिरपालाशालाभे,—इति जात्या द्रव्यमुपलक्षयन्नाचार्य्यस्तयोरलाभ एव सर्ववनस्पतीनामुपादानं, न तु तत्प्रतिनिध्योरपि कदरपारिभद्रयोरभावे,—इति दर्शयति। बिभीदकादयो वृक्षजातिविशेषाः ॥ १५ ॥ ० ॥

## विशाखानि प्रति लूनाः कुशाबर्हिः ॥ १६ ॥

विश्लिष्टाः पृथग्भूताः शाखाः पत्राणि यस्मात् स्थानात्, तानि विशाखानि—कुशस्कन्धप्रदेशा उच्यन्ते। तानि प्रति लक्षीकृत्य लूनाश्छिन्नाः कुशाः, बर्हिः—बर्हिःस्तरणार्थमासादयितव्याः—इत्यर्थः। बर्हिःसंज्ञकाः,—इति वा व्याख्येयम्। तदत्र विधेयप्राधान्यविवक्षयैकवचनं द्रष्टव्यम्। 'बर्हिषः'—इति बहुवचनान्तमेव शूलपाणिः पठति। तदा व्यक्त एवार्थः ॥ १६ ॥ ० ॥

## उपमूललूनाः पितृभ्यः ॥ १७ ॥

उपमूले मूलसमीपदेशे लूनाः कुशाः, पितृभ्यः पितृकर्म्मार्थमासादयितव्याः,—इति प्रसङ्गादिहोच्यते। ते खल्विमे पित्रर्थमासादयितव्याः कुशाः मूलसमीपेऽप्यधोभाग एव लवितव्याः नोर्द्ध्वभागे। कस्मात्?

" हरितायज्ञियादर्भाः पीतकाः पाकयज्ञियाः।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः "।

इति कर्म्मप्रदीपे समूललोपदेशात्। एके पुनरुपमूललूनानां समूललासम्भवं मन्यमानाः, पिण्डास्तरणकुशानां च्छिन्नमूलत्व-विधायककात्यायनसूत्रं पश्यन्तोभ्रान्ताः सूत्रमिदं पिण्डास्तरण-कुशपरम्—इति वदन्ति। तदसङ्गतम्! मूलादधस्ताल्लवनएव समूलत्वोपमूललूनत्वयोः सम्भवात्।

"गोकर्णदीर्घाश्च कुशाः सञ्छिन्नाः समूलकाः"।

इति तद्धृतवचनान्तरएव छिन्नानामपि कुशानां समूलत्व-दर्शनाच्च। कात्यायनस्तु न शस्मत्सूत्रकारः,—इति तत्सूत्रोपदर्शन-मत्रानुचितम् ॥ १७ ॥ ० ॥

**तेषामलाभे, शूकतृणशरशीर्य्यबल्वजमुतवनलशुण्ठ-वर्ज्जंसर्व्वंतृणानि ॥ १८ ॥**

तेषां यथोपदिष्टानां कुशानामलाभे, शूकतृणादिवर्ज्जं सर्व्व-तृणानि, वर्हिस्तरणार्थमासादयितव्यानि, वर्हिःसंज्ञकानि वा भवन्ति। तैः कुशार्थः कर्त्तव्यः—इत्यर्थः। शूकतृणं, शूकयुतं तृणम्। शूकानि फलपुष्पमञ्जर्य्यः। शरादयः, तृणजातिविशेषाः। यत् पुन-र्बल्वजविधायकं पुराणवचनम्—

"कुशाः काशाः बल्वजाश्च तथाऽन्ये तीक्ष्णरोमशाः।
मौञ्जाश्च शाद्वलाश्चैव षड्दर्भाः परिकीर्त्तिताः"।

इति। तत् कौथुमादिव्यतिरिक्तविषयम्। 'तीक्ष्णरोमशाः,—इति बल्वजानां विशेषणं, तेनात्र तद्व्यतिरिक्तबल्वजानां निषेधो-बोद्धव्यः'—इति नारायणोपाध्यायप्रभृतयः। तदसङ्गतम्। साधारण-

वचनव्यपाश्रयेण खशास्त्रसङ्कोचस्यान्याय्यत्वात् । 'तथाऽन्ये'—इति बल्वजानां भेदेनैव तीक्ष्णरोमशानामवगमाच्च । अन्यथा, 'तथाऽन्ये'—इति प्रमादपाठः स्यात् । षट्सङ्ख्याविरोधाच्च । षट्सङ्ख्याकीर्त्तनं खल्वेवं विरुध्यते । तीक्ष्णरोमशत्वस्य बल्वजविशेषणत्वे पञ्चानामेवोपलम्भात् । न च—

"पितृतीर्थेन देयाः स्युर्दूर्व्वाः श्यामाकमेवच" ।

इति तत्पूर्व्ववचनोपात्ताभ्यां दूर्वाश्यामाकाभ्यां सङ्ख्यापूरणम् इति वाच्यम् । सप्तसङ्ख्याऽऽपत्तेः । तस्मात्, ततो भेदेनैव इह षण्णामुपादानम् । षण्णामेव वा मध्ये दूर्वाश्यामाकयोरितरापेक्षया उपादेयत्वार्थं तयोः पूर्व्वं प्रातिस्विकतया कीर्त्तनम्,—इति वर्णनीयम् । ते खल्वत्र शाद्वलतयैव लभ्येते । यत्तु,—शाद्वलम्—इति दूर्वादिषड्विशेषणं पृथक्त्वे तु सप्तमापत्तेः,—इति वाचस्पतिमिश्रवर्णनम् । तदप्यनुचितमेव । विशेषणत्वाऽसङ्गतेः । शाद्वलस्यैकवचनान्ततया कुशादीनाञ्च बहुवचनान्ततया निर्देशात् परस्परमनाकाङ्क्षत्वप्रतीतेः । मौञ्जस्य शाद्वलस्येव—इति च मुञ्जादिभ्यो भेदेनैव शाद्वलस्यावगतेः । पूर्व्ववचनोपात्तयोः दूर्वाश्यामाकयोरत्रान्तर्भावस्योक्तत्वाच्च । षड्दर्भाः—इति खल्वत्र परिभाष्यते । तेषामेव दूर्वाश्यामाकयोः विशेषविवक्षया पूर्वत्रोपादानम्—इत्यस्मदुक्तैव वर्णना । अतएव इह पठितानामपि कुशानाम्—

"गोकर्णदीर्घाश्च कुशाः सच्छिन्नाः समूलकाः" ।

इति पूर्व्ववचनपूर्व्वार्द्धे परिकीर्त्तनं सङ्गच्छते । तस्मात् पूर्व्ववचने पूर्व्वार्द्धेन प्रथमकल्पानां कुशानाम्, उत्तरार्द्धेन च अनुकल्पान्तरा-

पेक्षया अभ्यर्हितयोः दूर्वाश्यामाकयोः पृथगुपादानम्—इत्या-
दरणीयम् ॥ १८ ॥ ० ॥

**आज्यंं स्थालीपाकीयान् व्रीहीन् वा यवान् वा चरुस्थालीं मेक्षणंं स्रुवमनुगुप्ता अप इति ॥ १९ ॥**

अत्र प्रतिपदम् उपकल्पयते—इति सम्बध्यते। कथम्? आज्यम् उपकल्पयते। स्थालीपाकीयान् स्थालीपाकसमर्थान्,—यावद्भिः स्थालीपाको निर्वहति तावतो व्रीहीन् वा यवान् वा, उपकल्पयते। चरुस्थालीम् उक्तलक्षणाम्, उपकल्पयते। मेक्षणम्—

"इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्।
वृत्तञ्चाङ्गुष्ठपृथ्व्यग्रमवदानक्रियाक्षमम्।
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे।
दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनन्तु मेक्षणम्"।

इति कर्म्मप्रदीपोक्तलक्षणम्, उपकल्पयते। स्रुवमुपकल्पयते। स्रुवलक्षणमुक्तम्। अनुगुप्ता अप उपकल्पयते। इतिना, अन्यदप्येवम्भूतं दर्व्वीप्रभृतिकं सूचयति। उपकल्पनं चामीषामुदगग्राणामग्नेरुत्तरतः प्राञ्चं प्राञ्चं प्रयोजनानुसारेण करणीयम्। तथाच कर्म्मप्रदीपः।

"प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः।
तत्तथाऽऽसादयेद्द्रव्यं यद्यथा विनियुज्यते"।

इति। उपकल्पितानां चामीषां प्रसेकोवीक्षणमभ्युक्षणञ्चाद्भिः कर्त्तव्यम्। तदाह गृह्यासंग्रहः।

"द्रव्याणामुपक्लृप्तानां होमीयानां यथाविधि ।
प्रसिञ्चन् वीक्षणं कुर्य्यादद्भिरभ्युक्षणं तथा" ।

इति । तदिदं द्रव्यासादनं स्थण्डिलोपलेपनात् परत एव करणीयम् । कस्मात्? आचार्य्येण तथैव सूत्रितत्वात् । आचार्य्य-पुत्रोऽप्याह गृह्यासंग्रहे ।

"भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च ।
द्रव्याण्युत्तरतः स्थाप्य तूष्णीं कुर्य्याद्‌दङ्मुखीम्" ।

इति । तदनेनोपलेपनात् परं द्रव्यासादनमभिधाय, "लक्षणं तत् प्रवक्ष्यामि"—इत्यादिना लक्षणमग्निस्थापनादिकञ्च परतोऽभिहितत्वात् । अथैवमुदगग्नेर्द्रव्यासादनं कर्म्मप्रदीपोक्तं विरुध्यते । नैष दोषः । भविष्यताऽप्यग्निनोदीच्याः संवन्धोपपत्तेः । तथाच "पुरोडाशकपालेन तुषानुपवपति"—इत्यत्र यथा भविष्यता पुरोडाशेन कपालस्याभिसंवन्धो निर्णीतः, तथैवात्रापि भविष्यतैवाग्निना उत्तरस्याः संवन्धो बोद्धव्यः । अग्निस्थापनात् पूर्व्वमेव द्रव्यासादनस्योपदेशादनन्यगतेर्वचनात् ॥ १९ ॥

## यानि चानुकल्पमुदाहरिष्यामः ॥ २० ॥

यानि तैलादीन्यनुकल्पं प्रत्युदाहरिष्यामः । चशब्दात् यानि च उलूखलादीन्युदाहरिष्यामः, तान्युपकल्पयते ॥ २० ॥ ० ॥

अथेदानीमुपवसतो व्रतमुच्यते,—

## न तदहः प्रसृज्येत ॥ २१ ॥

तदहस्तस्मिन्नहनि, न प्रसृज्येत प्रकर्षेण त्यजेत् गृहम्—

इत्यर्थाद्गम्यते । सृज्यतिस्त्यजतिकर्म्मा । तदनेनास्य प्रवासो-निषिध्यते। प्रसृज्येत—प्रकर्षेण दूरं गच्छेत्—इति वा व्याख्येयम् ॥ २१ ॥ ० ॥

दूरादपि गृहानभ्येयात् ॥ २२ ॥

अभ्येयात् आगच्छेत्। स्वयं होतुम्। तदहरिति वर्त्तते॥ २२॥ ०॥

अबहुवादी स्यात् ॥ २३ ॥

बहु वदितुं शीलं यस्य,—सोऽयं बहुवादी. स न भवति,—इत्यबहुवादी, स्यात्, तदहरिति वर्त्तत एव । तदच,—तात्कालिकार्थकनिणिप्रत्ययात् वृथैव बहुवादी न भवेत्, व्याख्यानादौ स्वल्पदोषएव बहुकथनेऽपि,—इति दर्शयति ॥ २३ ॥ ० ॥

अन्यतस्तु धनं क्रीणीयान्न विक्रीणीत ॥ २४ ॥

अन्यतः सकाशात् धनं द्रव्यं क्रीणीयात्, न तु स्वयं विक्रीणीत अन्यस्मै । तदहरित्येव । तदच तुशब्दो भिन्नक्रमेण योजनीयः, अनर्थको वा । "मिताक्षरेष्वनर्थकम्"—इति वचनात् ॥ २४ ॥ ० ॥

सत्यं विवदिषेत् ॥ २५ ॥

ऋजुरक्षरार्थः । सत्यं वदेत्,—इति वक्तव्ये, सत्यं विवदिषेत्,—इति सूचयन्नाचार्य्यो मनसाऽप्यसत्यं वक्तुं नेच्छेदित्युपदिशति ॥ २५ ॥ ० ॥

अथापराह्ण एवाप्लुत्यौपवसथिकं दम्पती भुञ्जी-

**यातां; यदेनयोः काम्यᳫस्यात्, सर्पिर्मिश्रᳫस्यात्; कुशलेन ॥ २६ ॥**

अथ इध्माद्याहरणानन्तरम्, आप्लुत्य, अपराह्ण एव दम्पती भुञ्जीयाताम्—इति भिन्नक्रमेण योजनीयम्। कुतः? पूर्वाह्ण एव स्नानस्याम्नानात्, तद्बाधे च कारणविशेषाभावात्। तथाच स्मरणम्।

"चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्।
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले"।

इति। "अपराह्णे व्रतोपायनीयमश्नीयाताम्"—इति च तन्त्रान्तरे अपराह्ण एवानयोर्भोजनोपदेशात्। तस्माद् यथोक्तएवार्थः।

अह्नोऽपरो भागः, अपराह्णः। तत्रैव भुञ्जीयाताम्,—इत्येकभोजनमनयोर्नियम्यते,—द्विर्भोजनप्राप्तौ भोजनान्तरव्युदासार्थम्। किं भुञ्जीयाताम्? औपवसथिकम्। उपवसथेन संसृष्टं—तत्रापि यदविरुद्धम्। तत्रापि एनयोर्दम्पत्योर्यत् काम्यं कमनीयं रुचितम्—इत्येतत्। स्यात्, भवति। सर्पिर्मिश्रं घृतमिश्रञ्च स्यात्। यच्च कुशलेन सुखेन, परिणमति,—इति वाक्यशेषः। एतदुक्तं भवति। इत्थमौपवसथिकमल्पं भुञ्जीयातां, यत् भुक्तमनयोः सुखेन परिणमति, न मनागपि शरीरवैषम्यमुत्पादयति,—इति। एवं खल्वविघ्नेन श्वोयागः सम्पत्स्यते,—इत्यभिप्रायः। किम्पुनस्तदौपवसथिकम्? लवणादिवर्ज्जम्,—इति ब्रूमः। कुतः? गृह्यान्तरवचनात्। तथाचोक्तम्।

"लवणं मधु मांसञ्च क्षारं श्वो येन हूयते।
उपवासे न भुञ्जीत, नोत्तरात्रौ च किञ्चन"।

इति। अत्र, उत्तरात्रौ किञ्चन न भुञ्जीत,—इत्युपादानात्, दिवा दैवादभोजने, रात्रेः प्रथमयामेऽपि भोजनं दर्शयति।

"दिवोदितानि कर्म्माणि स्वकाले न कृतानि चेत्।
शर्वर्य्याः प्रथमे यामे तानि कुर्य्यादतन्द्रितः"।

इति च स्मृत्यन्तरम् ॥ २६ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मज-श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथम-प्रपाठकस्य पञ्चमी खण्डिका ॥ ० ॥

प्रथमप्रपाठके षष्ठी खण्डिका।

अथेदानीमौपवसथिकभोजननियमदृढिम्ने ब्राह्मणमुदाहरति,—

**माननतन्त्व्यो होवाचाहुता वा एतस्य मानुष्याहुतिर्भवति; य औपवसथिकं नाश्नाति ॥ १ ॥**

माननतन्त्व्योनाम कश्चिदाचार्य्यः ह किल उवाच। किम् उवाच? तदुच्यते। न हुता अहुता फलरहिता,—इत्येतत्। वै—इत्यनर्थको निपातः। एतस्य, औपवसथिकम् अनश्नतानस्य मानुष्याहुतिर्मनुष्योपकारार्था आहुतिः, सायंप्रातर्होमवैश्वदेवादिलक्षणा, भवति। हुताऽपि मानुष्यहुतिरहुता भवति— सर्व्वोऽपि होमो-निष्फलो भवतीत्यर्थः। मानुष्याहुतिः प्राणाग्निहोत्रलक्षणा वा। तथाच स्मर्य्यते।

"गृहस्थो ब्रह्मचारी च यस्त्वनश्नंस्तपश्चरेत्।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः"।

इति।

"अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम्"।

इति चैवमादि। तथाचावश्यं होतव्या मानुष्याहुतिः प्राणाग्निहोत्रलक्षणा अस्य न हुता भवतीत्ययं प्रत्यवैतीत्यभिप्रायः। एतस्य,—

इति आचार्य्य एव विवृणोति। 'य औपवसथिकं नाश्नाति' न भुङ्क्ते ॥ १ ॥ ० ॥

किञ्च । स खल्वयम्,—

**अनीश्वरो ह क्षोधुको भवत्यकाम्योजनानां पापवसीयसी ह्यस्य प्रजा भवति॥ २॥**

न ईश्वरोऽनीश्वरो ह किल भवति। सर्व्वत्रैश्वर्य्यमस्य व्याहन्यते स्वस्य द्रव्येऽपि,—इत्यर्थः। चोधुकः क्षुद्युक्तः,—अतृप्तः सदा भवतीत्यर्थः। न काम्योऽकाम्योऽकमनीयोऽस्पृहणीयो जनानां लोकानां भवति। किञ्च। पापवसीयसी पापशीला, ह किल अस्य औपवसथिकमनश्नुवानस्य, प्रजा सन्ततिर्भवति। पापं प्रसिद्धं वसीयः पुण्यम्। तदुभयवत्यस्य प्रजा भवति,—इति वा वर्णनीयम् ॥२॥०॥

अनश्नुवानस्य दोषमभिधाय, अथेदानीं वैपरीत्येनाश्नुवानस्य गुणा अभिधीयन्ते,—

**य औपवसथिकं भुङ्क्ते ईश्वरो ह भवत्यक्षोधुकः काम्यो जनानां वसीयसी ह्यस्य प्रजा भवति ॥ ३ ॥**

वसीयसी कल्याणी पुण्यवतीत्यनर्थान्तरम्। सुस्थिरा,—इति भट्टभाष्यम्। अपापवसीयसी,—इति पाठे,—पापवसीयसी व्याख्याता, सा न भवतीत्यपापवसीयसी। क्षतभाष्यमन्यत् ॥ ३ ॥ ० ॥

यस्मादौपवसथिकमनश्नुवानस्यैते दोषाः, अश्नुवानस्य चैते गुणा-भवन्ति,—

तस्मात् यत् कामयेतौपवसथिकं भुञ्जीयाताम्॥ ४॥

यदौपवसथिकं कामयेत गृहपतिः, व्यत्ययाद्वा कामयेयातां दम्पती, तद्भुञ्जीयाताम्॥ ४॥ ०॥

अथेदानीमन्यदपि व्रतमभिधीयते,—

अध एवैताꣳरात्रिꣳशयीयाताम्॥ ५॥

अधो भूमावेव न पल्यङ्कादौ। स्वस्तरन्तु न निषिध्यते। एतां उपवसथदिवसीयां रात्रिं शयीयातां दम्पती॥ ५॥

तौ खलु जाग्रन्मिश्रावेवैताꣳरात्रिं विहरेयातामितिहासमिश्रेण वा केनचिद्वा॥ ६॥

तौ दम्पती। खल्वित्यनर्थको निपातः। जाग्रन्मिश्रौ जाग्रदवस्थयैव स्वापं मिश्रयन्तौ, एतामौपवसथिकां रात्रिं विहरेयातां नयेयाताम्—इत्यर्थः। कथं जाग्रन्मिश्रौ भवेताम्? तदुच्यते। इतिहासमिश्रेण। भावप्रधानोऽयं निर्देशः। इत्थम्भावे तृतीया। इतिहासमिश्रतया—तदालोचनयेत्येतत्। इतिहासमिश्रेण केनचित् सद्व्यवहारेण वा,—इति वा व्याख्येयम्। अन्येनापि केनचित् पुण्यकथादिना वा,—इत्ययमभ्युपायो जाग्रन्मिश्रत्वे॥ ६॥

जुगुप्सेयातान्त्वेवाव्रत्येभ्यः कर्म्मभ्यः॥ ७॥

जुगुप्सेयातां निन्देताम्। अव्रत्येभ्यः, व्रते साधु व्रत्यं, तन्न भवतीत्यव्रत्यं,—व्रतविरुद्धमुच्यते। तेभ्यः कर्म्मभ्यः ग्राम्यधर्म्मादिभ्यः,—तानि कर्म्माणि त्यक्तुम्—इत्यर्थः। गोप्तुम् इच्छा वा जुगुप्सोच्यते। तदा

खल्वन्यत्येभ्यः आत्मानं रक्षितुम् इच्छेताम्—इति व्यक्तैव वचनव्यक्तिः। तुशब्दः सम्भवकालं व्यवच्छिनत्ति। एवशब्दश्च, प्रकृतं नियमयन् व्यतिरेके व्रतभङ्गमवगमयति। अतएव स्मर्य्यते,—

"स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेवच।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
अनुरागात् कृतञ्चैव ब्रह्मचर्य्यविरोधकम्।
विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्"।

इति।

"उपवासे तथा यौनं हन्ति सप्त कुलानि वै।
स्त्रीणां सम्प्रेक्षणात् स्पर्शात्ताभिः कङ्कथनादपि।
ब्रह्मचर्य्यं विपद्येत, न दारेष्वृतुसङ्गमात्"।

इति चैवमादि। अत्र च, सम्प्रेक्षणात्, सङ्कथनात्,—इत्यत्र सरागत्वं संशब्दस्यार्थः, साहचर्य्यात् स्पर्शेऽपि तथा,—इति शूलपाण्युपाध्यायाः। तुशब्दश्चशब्दार्थो वा,—गात्राभ्यङ्गादीनि समुच्चिनोति। कस्मात्?

"गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलञ्चानुलेपनम्।
व्रतस्थो वर्ज्जयेत् सर्व्वं यच्चान्यद्बलरागकृत्"।

इत्येवमादिस्मरणात् ॥ ७ ॥ ० ॥

## न प्रवसन्नुपवसेदित्याहुः ॥ ८ ॥

प्रवसन् प्रवासमनुतिष्ठन् न उपवसेत्,—इत्याहुरेके आचार्य्याः।

एतस्मादेवावगम्यते,—प्रवसन्नप्युपवसेत्,—इत्यन्ये आचार्य्या मन्यन्ते—इति ॥ ८ ॥ ० ॥

यदा तु खलु प्रवसन् गृहपतिर्नोपवसति, तदाऽपि,—

## पत्न्या व्रतं भवतीति ॥ ९ ॥

पत्न्या व्रतमौपवसथिकं भवति,—इति आकराचार्य्याः ॥ ९ ॥

तदेवं प्रवसता नोपवस्तव्यम्,—इत्येकेषामाचार्य्याणां मतं, प्रवसताऽप्युपवस्तव्यम्—इति चापरेषाम् । एतस्मिंश्च विकल्पे सति,—

## यथा कामयेत, तथा कुर्य्यात् ॥ १० ॥

कृतभाष्यमेतत् ॥ १० ॥ ० ॥

## एवमेवाहिताग्नेरप्युपवसथो भवति ॥ ११ ॥

आहिताग्निः पञ्चाग्निरुच्यते । स च,—

"पवनः पावनस्त्रेता यस्य पञ्चाग्नयो गृहे" ।

इति स्मृत्युक्तः । पवन आवसथ्योऽग्निः, पावनः सभ्योऽग्निः यः शीतापनोदनाद्यर्थं बहुषु देशेष्वपि विधीयते,—इति कुल्लूकभट्टः । त्रेता दक्षिणाग्निगार्हपत्याहवनीयलक्षणमग्नित्रयम् । स्पष्टमन्यत् । औपासनाग्निमधिकृत्य उपवसथस्य सूचितत्वादाहिताग्नेरेष न प्राप्नोतीत्येवमतिदिश्यते ॥ ११ ॥ ० ॥

## यज्ञाम्नायो विदध्यात् ॥ १२ ॥

आम्नायते अभ्यस्यते,—इत्याम्नायो वेद उच्यते । स खल्वाम्नायः

शाखान्तरीयोऽपि यदन्यद्विदध्यात्, तदपि कर्त्तव्यम्,—इति वाक्य-शेषः। अध्वर्य्युप्रत्ययत्वादग्निहोत्रस्य तदाम्नायविहितं कुर्य्यादित्यभि-प्रायः। चः समुच्चये, पूर्व्वोक्तमेव समुच्चिनोति ॥ १२ ॥ ० ॥

**अथ पूर्व्वाह्ण एव प्रातराहुतिँ हुत्वाऽग्रेणाग्निं परि-क्रम्य दक्षिणतोऽग्नेः प्रागग्रान् दर्भानास्तीर्य्य ॥ १३ ॥**

अथापरदिने प्रातराहुतिं हुत्वा। सिद्धाया अपि प्रातराहुतेः पुनरभिधानं क्रमार्थम्। कथन्नाम? प्रातराहुतिं हुत्वा समिदा-धानान्तं विधाय वक्ष्यमाणं कर्म्म कुर्य्यात्। कुतः?

"आधाय समिधञ्चैव ब्रह्माणमुपवेशयेत्"।

इति कर्म्मप्रदीपदर्शनात्। "अग्निमुपसमाधाय दक्षिणतो-ब्रह्मासनमास्तीर्य्य" इति च गृह्यान्तरम्। नैतदेवम्। कस्मात्? स्वशास्त्रविरोधात्। तथाच गृह्यासंग्रहः।

"लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्दहेत्।
ततो भूमिग्रहं कृत्वा कुर्य्यात् परिसमूहनम्।
ब्रह्माणमुपसंकल्प्य चरुश्रपणमारभेत्"।

इति। कर्म्मप्रदीपोक्तस्तु क्रम आधानविषयः। कथं ज्ञायते? तत्रैव तदभिधानात्। गृह्यान्तरमप्यन्येषामेव न त्वस्माकम्। स्वशास्त्र-विरोधापत्तेः। कात्यायनादिभिर्हि तत् सूचितम्। ते किल काण्वादिशाखिनां सूत्रकाराः। तथाच भूमिजपं तृणेन परिसमूहनञ्च कृत्वा वक्ष्यमाणं कुर्य्यादित्ययमत्र कर्म्मक्रमः। अधिकमग्रे वक्ष्यामः। तदयमर्थः। प्रातराहुतिं हुत्वा पूर्व्वाह्ण एव—प्रतिपद्भावेऽपि,—

इत्यवोचाम। अग्रेण पूर्व्वया दिशा, अग्निं परिक्रम्य अग्निं प्रदक्षिणीकृत्य गत्वा, दक्षिणतो दक्षिणस्यां दिश्यग्नेः। सार्व्वविभक्तिकस्तसिल्।

"उदग्धारामविच्छिन्नामाज्यमारभ्य दक्षिणाम्।
दद्याद्ब्रह्मासनस्थाने सर्वकर्म्मसु नित्यशः"।

इति गृह्यसंग्रहवचनात्, अविच्छिन्नां वारिधारां दत्वा, प्रागग्रान् दर्भान् आस्तीर्य्य, ब्रह्मोपवेशनार्थम्। निरस्यति,—इति वक्ष्यमाणेन सम्बन्धः। तच्च निरसनं ब्रह्मणः कर्म,—इति वक्ष्यामः। ततश्च, एतदन्तं कर्म्म याजमानिकम्। कथन्तर्हि आस्तरणनिरसनयोः सम्बन्धः? समानकर्त्तृकत्वाभावात्। कुतः पुनः समानकर्त्तृकत्वमन्तरेण न सम्बन्ध उपपद्यते? क्त्वाप्रत्ययबलात्,—इति चेत्;—इति चेत् भवान् पश्यति क्त्वाप्रत्ययबलादेतदवगम्यते; समानकर्त्तृकया कयाचित् क्रियया समस्य सम्बन्धेन भवितव्यम्,—इति अचोच्यते। नान्यथोपपत्तेः। नैष दोषः। कस्मात्? अन्यथाऽप्युपपत्तेः क्त्वाप्रत्ययस्य। कथम? पूर्वकालतामात्रार्थतया। तत्राप्येष दृश्यते,—इति वक्ष्यामः। 'अन्यच्चेष्टेत्'—इति वा व्यवहिततरेण वक्ष्यमाणेन सम्बन्धो वर्णनीयः। एवं किल भट्टनारायणादयो व्याचचक्षिरे। श्लोकश्चात्र भवति।

"येन यस्याभिसम्बन्धो दूरस्थस्यापि तस्य सः।
अर्थतो ह्यसमर्थानामानन्तर्य्यमकारणम्"।

इति। अतिक्रान्तसंबन्धश्च गोभिले ग्रहीतव्य इति चोक्तं गोभिलपुत्रेण। तच्च पुरस्तादुपदर्शितम् ॥ १३ ॥ ० ॥

अथेदानीं ब्राह्मं कर्म्म अभिधीयते,—

**तेषां पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या ब्रह्माऽऽसनात् तृणमभिसंगृह्य दक्षिणापरमष्टमं देशं निरस्यति,—निरस्तः परावसुरिति ॥ १४ ॥**

तेषां यजमानास्तृतानां दर्भाणां, पुरस्तात् पूर्व्वस्यां दिशि, प्रत्यङ्मुखः पश्चिमाभिमुखः, तिष्ठन् ऊर्द्धः सन्, सव्यस्य वामस्य, पाणेः करस्य, अङ्गुष्ठेन, उपकनिष्ठिकया—कनिष्ठसमीपदेशस्था अङ्गुली उपकनिष्ठा अनामिका च उच्यते, उपकनिष्ठैव उपकनिष्ठिका, तया च अङ्गुल्या, ब्रह्मा ब्रह्मतया परिकल्पितः इदानीमपि कयाचिद्विवचया ब्रह्मा—इत्युच्यते। आसनात्—तदर्थकल्पितात् यजमानास्तृतात् कुशसंघात्, तृणं दर्भरूपम्, अभि संगृह्य गृहीत्वा, दक्षिणापरं—दक्षिणस्याश्च अपरस्याश्च दिशोरन्तरालम्, अतएव,—अष्टमम् उभयदिगष्टमांशं, देशं दिग्विभागं; नैर्ऋतकोणम्,—इत्येतत्। तं प्रति, निरस्यति प्रक्षिपति ;—निरस्तः परावसुः,—इति, अनेन मन्त्रेण।

तदिदं निरसनं ब्राह्मं कर्म्म—इति विज्ञायते। कुतः? ब्रह्मा,—इति कर्त्तृनिर्द्देशात्। लाट्यायनसूत्रणाच्च। स खल्वाचार्य्योऽन्यत्रैव याजमानं कर्म्म सूत्रयित्वा, "सर्व्वत्र ब्रह्मा दक्षिणत उदङ्मुखः कुर्य्याद्दु मेभ्योऽन्यत्"—इति ब्राह्मं कर्म्म वक्तुमुपक्रममाणः तत्रैव प्रकरणे,—"तद्दक्षिणतो निरस्तः परावसुरिति दक्षिणा तृणं निरस्येत्, आवसोः सदने सीदामीत्युपविशेत्"—इति सूत्रयाञ्चकार। तदनेन,

निरसनं ब्राह्मं कर्म्म,—इत्यवगच्छामः। अतएव तेनैव "दक्षिणार्द्धं तु सदसः पूर्व्वमुपवेशनं प्रस्तोतुः प्रत्युपवेशनं ब्रह्मोपवेशनेन; निरस्तः परावसुरिति दक्षिणा तृणं निरस्येत्, आवसोः सदने सीदामीत्युपविशेत्"—इति ब्राह्मं कर्म्म निरसनमुपवेशनञ्च अन्यत्राप्यतिदिष्टम्। एतस्माच्च कारणात् नात्र आसनेन ब्रह्मणः सम्बन्धः, अपितु निरसनेनैव,—इत्यवगन्तव्यम्।

ये तु ब्रुवते,—'नात्र ब्रह्मेत्यासनेन सम्बन्धः, उपवेशनात् पूर्वं तत्सम्बन्धाभावात्'—इति तान् प्रति वक्तव्यम्। तदर्थपरिकल्पितत्वादासनस्य अस्त्यत्र कोऽपि सम्बन्धः—इत्यकामेनापि वाच्यम्। लोकेऽपि देवाद्यर्थपरिकल्पितासनादौ देवासनादिव्यपदेशाः शतशो दृश्यन्ते। "लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति सम्भवे तदर्थान्येव सूत्रेषु"—इति खल्वनुक्रमणिका शास्त्रतात्पर्य्यविदाम्। "पुरोडाशकपालेन तुषानुपवपति"—इति च भविष्यता पुरोडाशेन कपालस्य व्यपदेशो दृश्यते। तस्मात्,—यथा, "प्रैतु होतुश्चमसः"—इत्यत्र, होता यत्र चमति चमिष्यति अचमीद्वा स होतुश्चमसः,—इति चमसिनां शेषभक्षाधिकरणे निर्णीतं, तथा अत्रापि ब्रह्मा यत्र आस्ते आसिष्यते आसिष्ट वा, तद्ब्रह्मासनम्,—इति शक्यते वक्तुम्। अनयैव दिशा,—ब्रह्मासनमास्तीर्य्य,—इति, दद्याद्ब्रह्मासनस्थाने,—इति, ब्रह्मासने निधाय,—इति चैवमादयः शतशः व्यपदेशाः समुपपद्यन्ते। एतावन्मात्रे पुनरत्र कारणेऽभ्युपगम्यमाने ब्रह्मासनात्—इति यथाश्रुत एवार्थो वर्णनीयः स्यात्। ब्रह्मासनयोरिदानीमपि सम्बन्धस्य अस्माभिरुपपादितत्वात्।

श्रुत्या खल्वासनसम्बन्धो ब्रह्मणोऽत्रावगम्यते, वाक्येन च व्यवहित-योजनया निरसनसम्बन्धश्चिकीर्षितः ।

कथन्तर्हि प्रकृतेऽपि निरसनेन सम्बन्धः ? ननु श्रुत्या आसन-सम्बन्ध एव स्यात् । स्यादेतदेवं, यदि शास्त्रान्तरमस्यां वर्णनायां कारणं न स्यात् । अस्ति चात्र स्पष्टं शास्त्रान्तरम् । आसन-सम्बन्धेऽपि ब्रह्मणो न ज्ञायते,—को निरस्यति ?—इति । अवश्यमत्र कर्त्ता कश्चित् कल्पयितव्यः । स तावदुपस्थितत्वात् बलवच्छास्त्रान्तरबलाच्च ब्रह्मैव कल्पयितुमुचितः । न खल्वत्र यजमानः कर्त्ता साक्षादुपदिश्यते, सन्निधीयते वा । क्त्वाश्रुतेः पूर्व्वापरीभावमात्रेणापि चरितार्थत्वात् । स खल्वत्र चिकल्पयिषितः । न तु शक्यते कल्पयितुम् । ग्रन्थान्तरविरोधात् । तदपि खल्वस्म-च्छास्त्रमेव, किमिति यदृच्छाकल्पनया उपरुध्येत ! । उभयसम्ब-न्धस्य च वक्तुमावश्यकत्वे, निरसनसम्बन्ध एव तावदुचितो वर्णयि-तुम् । गुणप्रधानभावेनोभाभ्यामन्वये च प्रधानानुरूपैव विभक्ति-रभियुक्तैरनुमन्यते । तस्मादस्मदुक्तमेव समाधानमादरणीयम् ॥ १४ ॥ ० ॥

**अप उपस्पृश्याथ ब्रह्माऽऽसन उपविशत्यावसोः सदने सीदामीति ॥ १५ ॥**

अप उदकम्, उपस्पृश्याचम्य स्पृष्ट्वा वा, अथानन्तरं ब्रह्मा आसने यथोक्ते उपविशति,—आवसोः सदने सीदामीत्यनेन मन्त्रेण । तदत्र सूत्रमनवमृश्यैव,—'आवसोः सदने सीद,—इति यजमानो ब्रूयात् । एतदन्तमेव कर्म्म याजमानिकम् । सीदामि,—

इत्यभिधाय ब्रह्मा उपविशेत्'—इति भवदेवभट्टकल्पना समुन्न-सिता ॥ १५ ॥ ० ॥

स खल्वयम्,

**अग्निमभिमुखो वाग्यतः प्राञ्जलिरास्त आकर्म्मणः पर्य्यवसानात् ॥ १६ ॥**

अग्निम् अभिमुखः आभिमुख्येनाग्निमुखः,—उदङ्मुख इत्यर्थः । वाग्यतो नियमितवचनः प्राञ्जलिः प्रकृष्टोऽञ्जलिर्यस्य, सोऽयं प्राञ्जलिः कृताञ्जलिपुटः सन् आस्ते । कियन्तं कालमास्ते ? आ कर्म्मणः पर्य्यवसानात् । परि सर्व्वतोभावेन कर्म्मणः अवसानं समाप्तिः कर्म्मणः पर्य्यवसानम्, तत्पर्य्यन्तम् । किमिदं कर्म ? यत् क्रियते यजमानेन, तदिदं यागादि कर्म । कुत्र पुनरस्य सर्व्वतो-भावेन अवसानम् ? दक्षिणादाने—इति ब्रूमः । कुतः ? तत्र तद्विधानात् । कर्म्मान्ते खल्वेषा विधीयते । अदत्तायां खल्वस्यां कृतमपि कर्म न परिसमाप्यते, निष्फलत्वात् । अतएव,—'हतो-यज्ञस्त्वदक्षिणः'—इति स्मरन्ति । आह, दक्षिणायाः अनेन अङ्गत्वम् केवलमुच्यते, तदभावे च कर्मणो वैगुण्यात् निन्देयम् ? तर्हि व्यक्रमस्याम् अदत्तायां कर्म न परिसमाप्यते, अपि तु दत्तायामेव,—इति यथोक्त एवार्थः । अतएव,—आ वसोः सीदामि,—इति ब्रह्मोपवेशनमन्त्रलिङ्गमनुगृह्यते । भट्टनारायणप्रभृतयस्तु वर्ण-यन्ति—'कर्म्म, कृताकृतप्रत्यवेक्षणम्'—इति ॥ १६ ॥ ० ॥

स खलु वाग्यतोऽपि,—

भाषेत यज्ञसꣳसिद्धिम् ॥ १७ ॥

भाषेत वदेत्, यज्ञसंसिद्धिं यज्ञस्य सम्यक् सिद्ध्यनुकूलां वाचम्;—यदा खल्वन्यथैव होत्रा कर्म क्रियते, तदा यज्ञस्य सम्यक् सिद्ध्यर्थम्,—एतदेवं कुरु, कृत्वा चैतदेतत् कुरु,—इत्येवमादिलक्षणाम्। एतदन्यत्र अस्य वाग्यतत्वम्—इत्यर्थः। १७ ॥

तत्रापि—

नायज्ञियां वाचं वदेत् ॥ १८ ॥

अयज्ञियां यज्ञानर्हामसंस्कृतां वाचं न वदेत्। भवति चात्र ब्राह्मणम्। "साधुभिर्भाषितव्यं, नापभ्रंसितवै न म्लेच्छितवै"—इति॥ १८ ॥ ०।

यद्ययज्ञियां वाचं वदेत्; वैष्णवीमृचं यजुर्वा जपेत् ॥ १९ ॥

यदि कुतश्चित् कारणात् अयज्ञियामसंस्कृतां वाचं वदेत्,—तर्हि वैष्णवीं विष्णुदेवताकाम् ऋचम्—इदं विष्णुर्विचक्रमे,—इत्यादिलक्षणां जपेत्। मुख्यश्चायं पक्षः, इह वाशब्दाश्रवणात्। तदसम्भवे, यजुर्वा जपेत्। यजुश्च, विष्णोः शिरोऽसि—इत्यादिलक्षणम्,—इति भट्टनारायणोपाध्यायाः। विष्णोरराटमसि—इत्यादिलक्षणम्,—इति रघुनन्दनादयः। तदत्र भगवन्तो भूमिदेवाः प्रमाणम् ॥ १९ ॥ ० ॥

अपिवा नमोविष्णवे इति ब्रूयात् ॥ २० ॥

अपि वा, ऋग्यजुषोर्जपासम्भवे, नमो विष्णवे इत्येवं ब्रूयात् ॥ २० ॥

यद्युवा उभयं चिकीर्षेद्धौत्रञ्चैव ब्रह्मत्वञ्चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोदकमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय, तेनैव प्रत्यावृज्याथान्यच्चेष्टेत्॥ २१॥

यद्यस्ति ब्राह्मणान्तरे। उ वै,—इत्यनर्थकौ निपातौ। एवमेके। यद्युवा,—इति निपातसमुदायो यद्यर्थे। एवमपरे। उभयं चिकीर्षेत् कर्त्तुमिच्छेत्। तदनेन लिङ्गेन विधिरनुमीयते;—असम्भवे उभयमपि स्वयं कुर्य्यात्,—इति। तदिदमभिहितमस्माभिः,—'अथ यदि दधि पयो यवागूं वा'—इत्येवमादिके सूत्रे। किं पुनस्तदुभयम्? तदुच्यते। हौत्रं होतुः कर्म चैव, ब्रह्मत्वं ब्रह्मणः कर्म चैव। तर्हि, एतेनैव कल्पेन पूर्व्वोक्तयैव आवृता, अग्रेणाग्निम्—इत्येवमादिकया। एवकारकरणात्,—आवसोः सदने सीदामि,—इति मन्त्रोऽपि एवमेवाविकृतः पठनीयः,—इत्यवगम्यते। छायया त्रायते—इति छत्रम् आतपत्रं वा, उत्तरासङ्गमुत्तरीयं वा, उदकमण्डलुम् उदकपूरितं कमण्डलुं वा, दर्भवटुं कुशब्राह्मणं वा,—

स खल्वयं दर्भवटुर्यथा निर्म्मातव्यः, तदाह गृह्यासंग्रहपरिशिष्टम्।

"ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः।

दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः"।

इति। अत्र च,—

"द्विरावृत्त्याथ मध्ये वै अर्द्धावृत्त्याऽन्तदेशतः।

ग्रन्थिः प्रदक्षिणावर्त्तः स ब्रह्मग्रन्थिसंज्ञकः"।

इति पुराणवाक्यमप्यनुसन्धेयम्। दर्भपरिमाणञ्चात्र नास्ति,—इत्याह कर्मप्रदीपः।

"यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा ।
दर्भसङ्ख्या न विहिता विष्टरास्तरणेष्वपि" ।

इति । एवञ्च,—

"पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन च विष्टरः" ।

इति वचनं यदि समूलं, तदा सम्भवासम्भवाभ्यां नियमानियमयोर्व्यवस्थितो विकल्पः,—इति परिशिष्टप्रकाशः । शाख्यन्तरीयम्,—इति तत्त्वकारः । वस्तुतस्तु पञ्चाशद्भिर्वा अनियतसंख्यकैर्वा कुशैर्ब्रह्मा भवेदिति विकल्प आदरणीयः । द्वयोरेव स्वशास्त्रे उपदिष्टत्वात् । कात्यायनः किल कर्मप्रदीपे दर्भवटौ दर्भसंख्या न विहितेत्याह । आचार्य्यपुत्रस्तु गृह्यासंग्रहे,

"कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरः स्मृतः ?
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः" ।

इति पञ्चाशद्भिः कुशैर्ब्रह्मा भवतीत्यभिहितवान् । एवञ्चाचार्य्यपुत्रस्यैतद्वचनमित्यविदुषस्तत्त्वकारस्य शाख्यन्तरीयत्वकल्पनं कल्पनमेव ।

"पञ्चभिर्नवभिर्वापि सार्द्धद्वितयवेष्टितम् ।
ॐकारेणैव मन्त्रेण द्विजः कुर्य्यात् कुशद्विजम्" ।

इति संख्यान्तरं कौथुमादिव्यतिरिक्तविषयम् ।

तमिमं दर्भवटुं वा, ब्रह्मासने निधाय स्थापयित्वा, तेनैव पथा, येन पूर्व्वं परिक्रमणं कृतं तेनैव पथा अप्रदक्षिणेनाग्निं प्रत्याव्रज्य आगत्य पूर्व्वस्थानम्—इत्येतत् । अथानन्तरम्, अन्यत् वक्ष्यमाणं चेष्टेत् चेष्टेत, कुर्य्यादित्यर्थः ।

अथाङ्कः अथेतिविशिष्टमानन्तर्य्यं द्योतयति। किन्तत्? यथोपयोगमुत्तरतोऽग्नेर्द्रव्याणामधोमुखानामुदगग्राणां पूर्व्वपूर्व्वक्रमेण आसादनं, वीक्षणं, प्रोक्षणञ्च अद्भिः कृत्वा। तदेतत्। कुतः? शास्त्रान्तरदर्शनात्। तथाच कर्म्मप्रदीपः।

"प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः।
तत्तथाऽऽसादयेद् द्रव्यं यद् यथा विनियुज्यते"।

इति। सांख्यायनगृह्यम्। "उत्तरतोऽग्नेर्यथोपयोगमवाञ्चि पात्राण्यासादयेत्"—इति।

"द्रव्याणामुपक्लृप्तानां होमीयानां यथाक्रमम्।
प्रसिञ्चन् वीक्षणं कुर्य्यादद्भिरभ्युक्षणन्तथा"।

इति च स्मृत्यन्तरम्। इदञ्च द्रव्यासादनाद्यनन्तरं भूमिजपादिकं सर्व्वनक्षे द्रष्टव्यम्। चर्व्वङ्गे तु कर्म्मणि द्रव्यासादनाद्यनन्तरमेव चरुश्रपणमाचार्य्यः सूचयिष्यति,—'अथोलूखलमुषले'—इत्यादि। ततश्च चर्व्वङ्गके कर्म्मणि, द्रव्यासादनाद्यनन्तरं चरुश्रपणं अनन्तरं भूमिजपादिकं कर्त्तव्यम्। अतएव, कर्म्मप्रदीपकृद्भिः, 'तिर्य्यगूर्द्ध्वसमिन्मात्रा'—इत्यादिना, 'शूर्पं वैणवमेवच'—इत्येवमन्तेन ग्रन्थेन सर्व्वङ्गमभिधाय,—'दक्षिणं वामतो बाह्यम्'—इत्यादिना भूमिजपपरिसमूहनहस्तविन्यासोऽभिहितः। तस्माद् ब्रह्मस्थापनद्रव्यासादनादिचरुश्रपणेभ्यः परं भूमिजपपरिसमूहनादिकम्—इति भवदेवभट्टगौरेश्वररघुनन्दनप्रभृतयः। भट्टभाष्ये तु,—भूमिजपं, ऋचेन परिसमूहनञ्च कृत्वा ब्रह्मस्थापनं कर्त्तव्यम्,—इत्युक्तम्। सरलापरिशिष्टप्रकाशकाराभ्यान्तु,—भूमिजपानन्तरं चरुश्रपणम्—उक्तम्।

इदन्त्विह वक्तव्यम्। कर्म्मप्रदीपकृता पदार्थानामुपन्यासमात्रं कृतं न तु क्रमोऽपि तेषामभिहितः। तत्र चर्व्वङ्गमभिधाय भूमिजपप्रकाराभिधानात् खल्वानुमानिकः क्रमः परिचिकल्पयिषितः। स चायमाचार्य्यपुत्रोपदिष्टक्रमविरोधाद्भवितुं नार्हति। तथाच "लेखनाभ्युक्षणे कृत्वा"—इत्यादि पुरस्तादुदाहृतम्। तस्मादाचार्य्यपुत्रवचनात् भूमिजपं त्र्युचेन परिसमूहनञ्च कृत्वा ब्रह्मस्थापनं कर्त्तव्यं ततश्चरुश्रपणमित्यादरणीयम्। आचार्य्योऽपि ब्रह्मस्थापनात् परं चरुश्रपणं सूचयिष्यति। अन्यच्चेष्टेदित्यनर्थकं तर्हि, ननु "अथोलूखलमुषले"—इति सूत्रयिष्यत्येव। नानर्थकम्। कथं कृत्वा? सामान्यविशेषभावोपपत्तेः। 'अन्यच्चेष्टेत्' इति सामान्यतः सूचयित्वा अथोलूखलमुषले,—इति विशेषतः सूत्रणमुपपद्यते। सामान्यप्राप्तेस्तु विशेषकथनमपुनरुक्तमेव। शास्त्रे चास्मिन् पुनरुक्तिरनुमतैवाचार्य्यस्येति च निवेदितमधस्तादेव। आदरार्थत्वाच्च। आदरार्थमपि पुनरुपादानं शास्त्रे बहुलमुपलभ्यते। यत्र चरुर्नास्ति, तत्र, अन्यदाज्यसंस्कारादिकमित्यभिप्रायेण वा वचनमेतमुपपादनीयम्। द्रव्यासादनन्तु आस्तां तावदिदानीं, यावदग्निस्थापनादपि पूर्व्वं करणीयमिति पुरस्तादेव व्यवस्थापितम्। सांख्यायनगृह्यन्तु नास्माकमित्यनुदाहरणम्॥ २१॥ ०॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजश्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य षष्ठी खण्डिका॥ ०॥

---

**अथोलूखलमुषले प्रक्षाल्य सूर्पञ्च पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्य्योपसादयति ॥ १ ॥**

अथेति आनन्तर्य्यार्थं पूर्व्वप्रकृतार्थं वा । पूर्व्वमासादिते उलूखलमुषले सूर्पञ्च—इत्येतत् त्रयम्—

"मुषलोलूखले वार्क्षे स्वायते सुदृढे तथा ।
इच्छाप्रमाणे भवतः सूर्पं वैणवमेवच" ।

इति कर्म्मप्रदीपोक्तलक्षणम्, प्रक्षाल्य, पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्य्य तत्रोपसादयति स्थापयतीत्यर्थः। पूर्व्वं खल्वग्नेरुत्तरतः समासादितानां सूर्पोलूखलमुषलानामिदानीमग्नेः पश्चिमतः स्थापनं कर्त्तव्यं निर्व्वापार्थम् । तत्रोलूखलमुषले खदिरादियज्ञियवृक्षमये । "वारुणान्यहोमसंयुक्तानि"—इति वचनात् वारुणमयानि वा । 'सूर्पं वैणवमेवच,'—इत्यत्र, 'सूर्पं चैषिकमेवच,'—इति केचित् पठन्ति । तत्रैषिकग्रहणं वैणवस्याप्युपलक्षणार्थमिति भट्टभाष्यम् । विसमासकरणं पृथक् संस्कारप्रज्ञापनार्थम् ॥ १ ॥ ० ॥

**अथ हविर्निर्व्वपति व्रीहीन् वा यवान् वा कंसेन वा चरुस्थाल्या वा ॥ २ ॥**

अथानन्तरम् आसादिते तस्मिन्नुलूखले हविर्निर्व्वपति प्रक्षिपति।

हविर्विशिनष्टि,—'व्रीहीन् वा यवान् वा'। केन निर्वपति? तदुच्यते। कंसेन वा चरुस्थाल्या वा ॥ २ ॥ ० ॥

कथं निर्वपति? तदभिधीयते—

**अमुष्मै त्वा जुष्टं निर्वपामीति देवतानामादेशꣳ सकृत्; द्विस्तूष्णीम् ॥ ३ ॥**

अमुष्मै त्वा जुष्टं निर्वपामीति अनेन मन्त्रेण, देवतायाः वेदमेयत्यागोद्देश्यायाः नाम्न आदेशः—आदिश्यते इत्यादेशः समुच्चारणं यथा भवति, तथा सकृदेकवारं निर्वपति, 'द्विः' वारद्वयं तूष्णीममन्त्रं निर्वपतीतिसम्बन्धः। तेन, 'अग्नये त्वा जुष्टं निर्वपामि'—इत्येवमादिमन्त्रेण सकृन्निरूप्य तूष्णीं द्विर्निर्वपेत्।

अत्र च यावता निरुप्तेन होमो निर्वर्त्त्यते किञ्चिच्चावशिष्यते, तावत् परिमितमेव हविर्निर्वप्तव्यम्। बहुदैवत्ये च चरौ न प्रत्येकमेवानुनिर्वापौ कर्त्तव्यौ, किन्तु तन्त्रेण द्वावेवानुनिर्वापौ सर्वशेषे करणीयौ। तदेतत् सर्वं कर्म्मप्रदीपः स्पष्टयाञ्चकार। तथा चोक्तम्।

"चरुः समश्ननीयोयस्तथा गोयज्ञकर्म्मणि।
वृषभोत्सर्ज्जने चैव अश्वयज्ञे तथैवच।
आवर्ष्यां वा प्रदोषे यः कृष्यारम्भे तथैवच।
कथमेतेषु निर्वापाः? कथञ्चैव जुहोतयः?
देवतासंख्यया ग्राह्या निर्वापाश्च पृथक् पृथक्।
तूष्णीं द्विरेव गृह्णीयात् होमश्चापि पृथक् पृथक्।
यावता होमनिर्वृत्तिर्भवेद्वा यत्र कीर्त्तिता।

शेषश्चेव भवेत् किञ्चित्तावन्तं निर्वपेच्चरुम् ”।

इति। अत्र, एतेषु इति, एतत्प्रकारेष्वन्येष्वपीत्यर्थः। प्रकारान्तरमाह गृह्यासंग्रहः।

“ चतुर्मुष्टिश्चरुः कार्य्यश्चतुर्णामुत्तरोऽपिवा ”।

इति मुष्टिः पलमिति गृह्यासंग्रहभाष्ये वक्ष्यामः ॥ ३ ॥ ० ॥

**अथ पश्चात् प्राङ्मुखोऽवहन्तुमुपक्रमते; दक्षिणोत्तराभ्यां पाणिभ्याम् ॥ ४ ॥**

अथेति पूर्वप्रकृतार्थम्। अथ पूर्वप्रकृतेन आसादितेन मुषलेन पश्चादनन्तरं प्राङ्मुखः प्राङ्मुख आसीनः, पूर्वप्रकृतानेव निरुप्तान् व्रीहीन् वा यवान् वा अवहन्तुम्। अवहननं कण्डनम्-इत्याख्यायते। उपक्रमते आरभेत। कथम्? दक्षिणोत्तराभ्यां, दक्षिणः करः उत्तरः उपरिगतो ययोः पाण्योस्ताभ्यां दक्षिणोत्तराभ्यां पाणिभ्यां गृहीतेन मुषलेनेत्यर्थः। “उपक्रमते इति वचनादुपक्रम एवायं नियमः। ततश्च शिष्येनापि पश्चादवहननं कारयतो न दोषः”—इति भट्टभाष्यम॥ ४ ॥ ० ॥

**त्रिः फलीकृतांस्तण्डुलान् द्विर्देवेभ्यः प्रक्षालयेदित्याहुर्द्विर्मनुष्येभ्यः सकृत् पितृभ्य इति ॥ ५ ॥**

त्रिर्वारत्रयम् अवघातेन फलीकृतान्—फल निष्पत्तौ—इति स्मरणात् निष्पत्तीकृतान् तण्डुलान् कृतच्छटनानित्यर्थाल्लभ्यते। एतदुक्तं भवति। मुषलेन तथाऽवहन्तव्यं यथा वारत्रयावघातेन तण्डुला निष्पद्यन्ते—इति। तथाच स्मरणम्।

"कण्डनं सेचनञ्चैव तथैवोलूखलक्रिया ।
सकृदेव पितॄणां स्याद्दैवे त्रिलं विधीयते"।

इति। अन्ये त्वाहुः—'फलीकरणं तण्डुलानां कंबूकापनयनं छटनमिति प्रसिद्धम्। सकृत् कण्डनेनैवापनीततुषांस्तण्डुलान् कृत्वा ततः त्रिः फलीकृतान् छटितान्'—इति। तदिदं सकृत् कण्डन-वचनमसङ्गतम्। दैवे त्रिलम्—इति स्मरणात्। अपरे तु व्याचक्षते,—'त्रिः फलीकृतान् त्रिधा वितुषीकृतान् कण्डनप्रच्छटनाभ्यामिति शेषः',—इति। तदेतत् मनीषिभिश्चिन्तनीयम्। तानिमांस्तण्डुलान् त्रिर्वारत्रयं देवेभ्यः प्रक्षालयेदित्याहुर्ब्रुवन्ति आचार्य्याः। अनेनैव सूत्रशेषोव्याख्यातः ॥ ५ ॥ ० ॥

## पवित्रान्तर्हिताᳬस्तण्डुलानावपेत् ॥ ६ ॥

प्रक्षालितांस्तण्डुलान् पवित्रान्तर्हितान्। पवित्रम्

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्"।

इति कर्म्मप्रदीपोक्तलक्षणम्, अन्तर्हितं व्यवहितं येषां, तान् पवित्रान्तर्हितान् कृत्वा आवपेत् निःक्षिपेत् चरुस्थाल्याम्। चरुस्था-ल्यामुत्तराग्रं पवित्रं निःक्षिप्य तण्डुलान्निःक्षिपेत्—इति तत्त्वकार-प्रभृतयः ॥ ६ ॥ ० ॥

## कुशलशृतमिव स्थालीपाकᳬश्रपयेत् प्रदक्षिणमुदा-युवन् ॥ ७ ॥

कुशलः पाक-निपुणो भण्यते। तेन शृतं पक्वमिव स्थालीपाकं

अपयेत् पचेत्। इवेति निपातः। कीदृशं पुनः शृतं कुशलशृतमिव भवति? उच्यते। अदग्धम् अकठिनम् अनतिशिथिलम् अवीतरसम् किल शृतं कुशलशृतमिव भवतीत्याचक्ष्महे। कुतः? लोकप्रसिद्धेः। कर्म्मप्रदीपोऽप्याह।

"स्वशाखोक्तश्चरुः स्विन्नोह्यदग्धोऽकठिनः शुभः।
न चातिशिथिलः पाच्यो न च वीतरसो भवेत्"।

इति। प्रदक्षिणं दक्षिणावर्त्तेन यथा भवति, तथा उदायुवन्—'यु मिश्रणे'—इ त स्मरणान्मेक्षणेनेद्धमौषन्मिश्रयन्नवघट्टयन्नित्येतत्। अपयेदितिसम्बन्धः। मेक्षणेन—इति कुतो लभ्यते? 'तस्मिन्नेवाग्नौ अपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्मेक्षणाभ्यां प्रदक्षिणमुदायुवन्,—इत्यन्वष्टक्ये दर्शनात्॥ ७॥ ०॥

## शृतमभिघार्य्योदगुद्वास्य प्रत्यभिघारयेत्॥ ८॥

शृतं पक्वं स्फुटितं चरुम् अभिघार्य्य आज्यस्रुवेणाप्लाव्य उदगुत्तरस्याम् अग्नेः उद्वास्य उत्तार्य्य प्रत्यभिघारयेत् पुनस्तथाऽऽप्लावयेत्। अभिघारणं चेदं शृतं पवित्रान्तर्हितं कृत्वा करणीयम्। तथाच गृह्यासंग्रहः।

'पवित्रान्तर्हितं कृत्वा चरुं प्राज्ञोऽभिघारयेत्।
उद्वास्य चैव विधिना एवं तन्त्रं न लुप्यते"।

इति। ॥ ८॥ ०॥

## अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात्; पुरस्ताद्दक्षिणतउत्तरतः पश्चादिति॥ ९॥

अग्निम् उपसमाधाय समिद्भिः समिध्य प्रज्वाल्य—इत्येतत्। कुशैः पूर्व्वमासादितैः त्रिप्रागग्राणि प्रति लूनैः समन्तं समन्तात् सर्व्वतः सर्व्वासु दिक्षु इत्यर्थः। परिस्तृणुयात् आच्छादयेत् विकिरेत् वा। कथम्? पूर्वस्यां दक्षिणस्याम् उत्तरस्यां पश्चात्—इत्यनेन क्रमेण। ॥९॥०॥

## सर्व्वतस्त्रिवृतं पञ्चवृतं वा ॥१०॥

सर्व्वतः सर्वासु दिक्षु त्रिवृतं वारत्रयं, पञ्चवृतं पञ्चकृत्वो वा, परिस्तृणुयात्—इत्यनुवर्त्तते ॥१०॥०॥

कथम्पुनरेकं परिस्तरणं सम्पद्यते? यस्य त्रिः पञ्चकृत्वो वा करणमुपदिश्यते। तदुच्यते,—

## बहुलमयुग्मसंहृतम् ॥ ११ ॥

बहुलं बहुतृणकम्। अयुग्मसंहृतं,—युग्मञ्च संहृतञ्च युग्मसंहृतम्—इति द्वन्द्वैकवद्भावः, तन्न भवतीत्ययुग्मसंहृतम्, अयुग्ममसंहृतञ्चेत्यर्थः। केचित्तथैव पठन्ति। असंहृतम् असंलग्नं पृथक् पृथगित्यनर्थान्तरम्। तदेवं प्रतिदिशमयुग्मैः परस्परमसंलग्नैर्बहुभिस्तृणैरेकम्परिस्तरणं सम्पद्यते, तस्य खल्वस्य त्रिः पञ्चकृत्वो वा करणमुपदिश्यते—इत्यर्थः। तत्त्वकारेणाप्यभिहितं—'प्रतिदिशं दर्भत्रयेणावृतानि कृत्वा तेषां मूलानि तथैवाच्छादयेत्'—इति। तत्र दर्भत्रयेणेति न नियमपरं वाक्यम। कस्मात्? परिस्तरणे दर्भसंख्यानियमाभावात्। तच्च पुरस्तादुदाहृतमस्माभिः। तदिदं परिस्तरणं पूर्वस्याम् उत्तरान्ता-दक्षिणान्तं यावत्, दक्षिणस्यां पूर्वान्तात् पश्चिमान्तं यावत्, यथा

दक्षिणस्यां तथोत्तरस्यां, यथा पूर्वस्यां तथा पश्चाद्दिशि कर्त्तव्यम् । कुतः पुनरेवमुच्यते? कुशानां प्रागग्रत्वानुरोधात् । 'प्राची सौम्या-पराजिता'—इति च स्मरणादिति वदन्ति ।

तदेतत् परिस्तरणस्वरूपप्रतिपादनपरं सूत्रम्,—'बहुलमयुग्म-संहतम्'—इति, न तु 'त्रिवृतं पञ्चवृतं वा'—इत्यस्य विशेषार्थम् । बहुलमयुग्मम्—इत्यनुवादापत्तेः । यच्च—"त्रिवृतं पञ्चवृतं वा"—इत्यनेनैवायुग्मत्वे सिद्धे अयुग्ममित्येकावृतस्यापि प्राप्त्यर्थम् । तथाच गृह्यान्तरम् । "सकृत् त्रिर्वा प्रदक्षिणं प्रतिदिशमग्नेस्तृणोति"—इति रघुनन्दनादृतं भट्टनारायणादिमतम् । तदसङ्गतम् । न ह्येतत् विशेषार्थं सूत्रं, किन्तर्हि?—परिस्तरणस्वरूपप्रतिपादनार्थम्—इत्यवोचाम । न खल्वदर्शिते परिस्तरणस्वरूपे त्रिवृतं पञ्चवृतं वा—इति समञ्जसं वचनम् । अदर्शिते हि स्वरूपे कस्य त्रिवृत् पञ्चवृद्वा उपदिश्येत । तदिदमर्थतः सूत्रं—'तत्रोदकेषु मन्त्राख्या'—इतिवदादितो द्रष्टव्यम् । तदेवं स्थिते, अयुग्मम्—इत्यस्य कुत-एवानुवादापत्तिः?—येन तत्परिहारार्थमेकाऽप्यावृत् परिकल्प्येत । कथमन्यथा, बहुलम्—इत्यत्र अनुवादता परिहरणीया? नित्यानु-वादतया परिहारस्त्वन्यत्रापि समानः । गृह्यान्तरमपि प्रदक्षिणं परिस्तरणं विदधत् कौथुमादीनामन्यत्रावतिष्ठते । 'पुरस्ताद्दक्षिणत उत्तरतः पश्चात्'—इति खल्वाचार्यः सूत्रयाञ्चकार ॥ ११ ॥ ० ॥

अथेदानीं परिस्तरणप्रकारोऽभिधीयते,—

**प्रागग्रैरग्रैर्मूलानि च्छादयन् ॥ १२ ॥**

प्रागग्रैः प्राक्कृताग्रैः कुशैः पश्चादास्तृतैरग्रप्रदेशैर्न मध्यैर्नापि

मूलैः पूर्वास्तृतानां कुशानां मूलानि च्छादयन् स्तृन्वन् परिस्तृणुयात् ॥ १२ ॥ ० ॥

एकस्तावदयं परिस्तरणप्रकार उक्तः, अथेदानीमन्योऽपि प्रकार उच्यते,—

**पश्चाद्वाऽऽस्तीर्य्य दक्षिणतः प्राञ्चं प्रकर्षति तथोत्तरेण ॥ १३ ॥**

पश्चाद्दिश्यग्नेरास्तीर्य दक्षिणतः प्राञ्चं प्रकर्षति प्रकिरन्नयति, तथा तेनैव प्रकारेणोत्तरेणोत्तरतः प्राञ्चं प्रकर्षति। उभयहस्तेन कुशान् गृहीत्वा दक्षिणहस्तगृहीतैर्दक्षिणतः परिस्तृणोति सव्यहस्तगृहीतैरपि सव्यतः—इति भट्टनारायणोपाध्यायाः ॥ १३ ॥ ० ॥

**दक्षिणोत्तराण्यग्राणि कुर्य्यात् ॥ १४ ॥**

दक्षिणानि च तान्युत्तराणि चेति दक्षिणोत्तराणि कुशाग्राणि कुर्य्यात्। दक्षिणहस्तगृहीतानि कुशाग्राण्युत्तराणि उपरिष्टात्—ऊर्द्ध्वं पूर्वस्यां दिशि—इत्येतत्। अर्थात् सव्यहस्तगृहीतान्यधराणि पश्चाद्दिशीत्यर्थः।

एवं वा,—

दक्षिणानि च उत्तराणि च—इति विग्रहः। दक्षिणस्यामग्राणि दक्षिणदिग्गतानि, उत्तरस्याञ्चोत्तराणि—उत्तरदिग्गतानि कुर्य्यात् ॥ १४ ॥ ० ॥

**एष परिस्तरणन्यायः सर्व्वेष्वाहुतिमत्सु ॥ १५ ॥**

एषोऽनन्तरोक्तः परिस्तरणप्रकारः सर्व्वेष्वाकृतिमत्सु—यत्र यत्र हूयते तत्र तत्र भवत्यन्यत्र सायंप्रातर्होमादिभ्यः। स्तरणादधः प्रोक्तेष्वन्येष्वपि चिप्रहोमेषु न भवति परिस्तरणमिति ह्यवोचाम। यत्र पुनश्चरुर्न क्रियते, तत्रापि परिस्तरणं न करणीयम्। ब्रह्मैव तत्र परिस्तरणस्थानीयो भवति। तदाह गृह्यासंग्रहः।

"ब्रह्माणं स्तरणं विद्याच्चरुर्यच न कल्पितः"।

इति ॥ १५ ॥ ० ॥

कुशानां तत्प्रतिनिधीनाञ्च खल्वभावे,—

**परिधीनप्येके कुर्व्वन्ति शामीलान् पार्णान् वा ॥ १६ ॥**

परिधीन्—

"बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः।

त्रयोभवन्त्यशीर्णाग्रा एकेषान्तु चतुर्दिशम्"।

इति कर्मप्रदीपोक्तलक्षणसंख्याकान्, एके आचार्य्याः कुर्वन्ति परिस्तरणार्थम। तानेव विशिनष्टि। शामीलान् शमीमयान्, तदसम्भवे पार्णान् पलाशमयान् वा। परिधीनां विन्यासप्रकार-माह कर्मप्रदीपः।

"प्रागग्रावभितः पश्चादुदगग्रमथापरम्।

न्यसेत् परिधिमन्यञ्चदुदगग्रः स पूर्वतः"।

इति। त इमे परिधयो गृह्याकर्मासु न करणीयाः। कुशाद्य-भावेऽप्युदकाञ्जलिभिरेव तत्र परिधिकृत्यं निर्वर्त्त्यते। तथाच गृह्यासंग्रहः।

"परिधींस्तु न कुर्व्वीत गृह्याकर्मसु याज्ञिकः ।
उदकाञ्जलयस्तिस्रस्ते वै परिधयः स्मृताः" ।

इति ॥ १६ ॥ ० ॥

## उत्तरतोऽपां पूर्णः स्रुवः प्रणीता ॥ १७ ॥

उत्तरतः उत्तरस्यां दिश्यग्नेरपाम् उदकेन पूर्णः सम्भृतः स्रुवो-यथोक्तलक्षणः प्रणीता भवति । तदनेन संस्कारविशेषादाप एवा-भिधीयन्ते । ताभिश्च पर्य्युक्षणपवित्रमार्ज्जनादय उदकार्थाः कर्त्तव्याः—इत्यभिप्रायः । "प्रणीताभिरुदकार्थः कार्य्यः"—इति च गृह्यान्तरम् ॥ १७ ॥ ० ॥

## भावे न वा स्यादित्येके ॥ १८ ॥

भावः सत्तेत्यनर्थान्तरम् । भावे अन्यस्य महतः पात्रस्य, अनन्त-रोक्तः स्रुवः स्याद्वा अदृष्टार्थम्, न वा स्यात्,—इत्येके आचार्य्या-मन्यन्ते । सेयं विहितप्रतिषिद्धा प्रणीता गृह्याकर्मसु नोपकल्प-यितव्या । कुतः ?

"विहितप्रतिषिद्धाञ्च प्रणीतां नोपकल्पयेत्" ;

इति गृह्यासंग्रहोक्तेः ॥ १८ ॥ ० ॥

## वर्हिषि स्थालीपाकमासाद्येध्ममभ्याधायाज्यꣳसंस्कु-रुते ॥ १९ ॥

वर्हिषि आस्तृते, स्थालीपाकं चरुम् आसाद्य स्थापयित्वा, इध्मं यथोक्तलक्षणम् अभ्याधाय,

"इध्मोऽप्येधार्थमेवाग्नेर्हविराहुतिषु स्मृतः"।

इति कर्म्मप्रदीपदर्शनात्,

"इध्मः सन्नहनादानं चरुश्रपणमेवच।

तूष्णीमेतानि कुर्व्वीत समस्तञ्चेध्ममादहेत्"।

इति गृह्यासंग्रहवचनाच्च अमन्त्रकमग्नौ प्रक्षिप्य अन्यत्राङ्ग-होमादिभ्यः। हूयते अनेनेत्याज्यं संस्कुरुते वक्ष्यमाणेन विधिना॥ १९॥०॥

किन्तदाज्यम्?—इत्यत आह,—

## सर्पिस्तैलं दधि पयो यवागूं वा॥ २०॥

सर्पिर्घृतम्। अयं तावन्मुख्यः कल्पः। तदलाभे तैलं तिलस्नेहम्। तदसम्भवे दधि। तदभावे पयः क्षीरम्। तस्याप्यलाभे यवागूं वा। संस्कुरुते—इति प्रतिपदं सम्बध्यते। सर्व्वमेतदाज्यमुच्यते, इत्यभि-प्रायः। तदाह गृह्यासंग्रहः।

"अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा।

चतुर्भिरेव यत् पूतं तदाज्यमितरद्घृतम्।

घृतं वा यदि वा तैलं पयो वा यदि यावकम्।

आज्यस्थाने नियुक्तानामाज्यशब्दोविधीयते"।

इति॥ २०॥०॥

## तत एव वर्हिषः प्रादेशमात्रे पवित्रे कुरुते॥ २१॥

ततस्तस्मादास्तीर्णशेषादेव वर्हिषः सकाशात्,—इति अन्यद्

वर्हिरास्तृतं व्यवच्छिद्यते। यस्मादेव वर्हिषः कुशमादाय आस्तरणं कृतं, तस्मादेव वर्हिषः,—इत्यर्थः। अन्ये त्वाहुः,—तत एव आस्तृतादेव वर्हिषः—इति। तदसङ्गतम्। कस्मात्? उच्यते। न खल्वेतत् सम्भवति एकमेव वर्हिः स्तरणाय च पवित्रकरणाय च—इति। न खल्वेकैव कुक्कुटी रन्धनाय च कल्प्यते प्रसवाय च!। न चैकत्र-विनियुक्तानां वर्हिषामसति विशेषवचने अन्यत्र विनियोगः शक्यते वक्तुम्। इदमेव विशेषवचनम्—इति चेत्। न, प्रमाणाभावात्। नास्ति अत्र किञ्चित् प्रमाणं भवदभिमत एवार्थोऽस्य वचनस्य—इति। अन्यथा खल्वेतदस्माभिर्व्याख्यातम्। अस्ति च विनियुक्तशेषं वर्हिरिति तदेव ग्रहीतुमुचितम्। तथा चोक्तम्। "विरोधे च श्रुतिविशेषादव्यक्तः शेषे"—इति। ततो विस्तीर्णशेषादिति च भट्टभाष्यम्।

प्रादेशमात्रे विस्तृततर्ज्जन्यङ्गुष्ठप्रमाणे। प्रमाणार्थे मात्रट्। पवित्रे कुरुते। द्विवचनं दलापेक्षम्। प्रादेशमात्रस्य वर्हिर्द्वयस्य खल्वत्र पवित्रीकरणमुपदिश्यते। न हि द्विदलपवित्रस्य द्वित्वं शक्यते वक्तुम्। 'वर्हिषः प्रादेशमात्रे'—इत्यभिधानात्। तथाच कर्मप्रदीपः।

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्।
एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम्।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु"।

इति आज्यस्योत्पवनार्थं द्विदलमेव पवित्रमाह। "समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति"—इति च ब्राह्मणम्॥ २१ ॥ ० ॥

**ओषधिमन्तर्धाय च्छिनत्ति न नखेन पवित्रे स्थो-वैष्णव्याविति ॥ २२ ॥**

ओषधिं व्रीह्यादिकम् अन्तर्धाय अन्तरा कृत्वा, 'पवित्रे स्थो-वैष्णव्यौ'—इत्यनेन मन्त्रेण च्छिनत्ति वृश्चति। न नखेन न करजेन,—इति ओषध्यन्यदप्यन्तर्धाय च्छिनत्ति,—इति दर्शयति। ॥ २२ ॥ ० ॥

**अथैने अद्भिरनुमार्ष्टि, विष्णोर्मनसा पूते स्थ इति ॥ २३ ॥**

अथानन्तरमेवाविमुञ्चन् एने पवित्रे अद्भिः प्रणीताद्भिरनुमार्ष्टि सव्यहस्तेन मूलप्रदेशे गृहीत्वा दक्षिणहस्तेनानुमृजेत् विष्णोर्मनसा पूते स्थः—इत्यनेन मन्त्रेण ॥ २३ ॥ ० ॥

**सम्पूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम् ॥ २४ ॥**

प्रकृतत्वादाज्यं, सम्पूय—

"पवित्रमन्तरा कृत्वा स्थाल्यामाज्यं समावपेत्।
एतत् सम्पूयनं नाम पश्चादुत्पवनं स्मृतम्"।

इत्युक्तक्रमेण, आज्यस्थाल्याम्—

"आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा।
महीमयी वा कर्त्तव्या सर्व्वास्वाज्याहुतिषु च॥
आज्यस्थाल्याः प्रमाणन्तु यथाकामन्तु कारयेत्।
सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते"॥

इति कर्म्मप्रदीपोक्तलक्षणायां निधाय। मक्षिकादिकमपनीय,—

इति सरला। उदगग्राभ्यां पवित्राभ्यां पवित्रघटकदलाभ्याम्,—इत्यर्थः। उत्पुनाति ऊर्द्धं शोधयति ॥ २४ ॥ ० ॥

कथम् उत्पुनाति ? तदुच्यते—

**अङ्गुष्ठाभ्याञ्चोपकनिष्ठिकाभ्याञ्चाङ्गुलिभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति,—देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरिति सकृद् यजुषा द्विस्तूष्णीम् ॥ २५ ॥**

अङ्गुष्ठाभ्याम्—इत्येवमादिद्विवचनं पाणिद्वयार्थम्। अङ्गुष्ठाभ्यामुपकनिष्ठिकाभ्याञ्चाङ्गुलिभ्याम् अभिसंगृह्य प्रकृतत्वात् पवित्रे गृहीत्वा। मूलदेशस्य सव्यहस्तेन पूर्व्वमेव धृतत्वात् अग्रे दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां मूले च वामहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा, "अन्तयोर्गृहीत्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्याम्"—इति गृह्यान्तरदर्शनात् कुशपत्रयोरुदगग्रत्वानुरोधात् उत्पवनस्य सौकर्य्यार्थञ्च दक्षिणहस्तोपरिभावेनाधोमुखव्यस्तपाणिरिति भवदेवभट्टादयः। प्राक्शः प्राग्गतं यथा भवति तथा त्रिः वारत्रयम् उत्पुनाति आज्यमग्नौ निःक्षिपति। त्रिरित्येतद्विशिनष्टि,—'देवस्त्वा'—इत्यनेन इतिकरणान्तेन यजुषा सकृदेकवारं, तूष्णीम् अमन्त्रकञ्च द्विर्व्वारद्वयम् ॥ २५ ॥ ० ॥

**अथैने अद्भिरभ्युक्ष्याग्नावप्युत्सृजेत् ॥ २६ ॥**

अथानन्तरमेवाविमुञ्चन्नेने पवित्रे सव्येन गृहीत्वा दक्षिणेन

प्रणीताग्निरभ्युच्य दक्षिणेनैव अग्नौ अप्युत्सृजेत् त्यजेत्। अपि-रुपसर्गः॥ २६॥ ०॥

## अथैतदाज्यमधिश्रित्योदगुद्वासयेत्॥ २७॥

अथानन्तरम् एतदनन्तरोक्तं सर्पिरादिरूपमाज्यम् अधिश्रित्य अग्नेरुपरि कृत्वा उदगुत्तरस्याम् अग्नेः, उद्वासयेत् स्थापयेत्। आज्यमिति योग्यत्वादाज्यपात्रम्—इत्यर्थः। तदनेन आज्यपात्रमपि संस्क्रियते—इति; सकृत् संस्कृताज्यपात्रे यदाज्यान्तरं निःक्षिप्यते, न तत्र संस्कारान्तरापेक्षा। तदाह गृह्यासंग्रहः।

"यथा सिमन्तिनी नारी पूर्व्वगर्भेण संस्कृता।
एवमाज्यस्य संस्कारः संस्कारविधिचोदितः॥
आज्यस्य हविषां चैव आज्ये पूर्व्वक्रियाविधिः।
तस्य संप्लवनं पूर्व्वं चरोः पर्य्युक्षणं परम्"॥

इति। अत्र च घृततैलपयसामधिश्रयणं कुर्य्यान्न दध्नः यवा-ग्वास्तु विकल्पः,—इति भट्टनारायणः। आचार्य्यपुत्रस्त्वाह गृह्या-संग्रहे।

"आज्यानां सर्पिरादीनां संस्कारे विधिचोदिते।
अनधिश्रयणं दध्नः शेषाणां श्रयणं स्मृतम्"॥

इति॥ २७॥ ०॥

## एवमाज्यस्य सꣳस्करणकल्पो भवतीति॥ २८॥

एवम् अनेन प्रकारेण आज्यस्य संस्करणकल्पो भवति, यत्र यत्राज्यं संस्क्रियते तत्र तत्रैवं कर्त्तव्यम्—इत्यभिप्रायः। इतिः

खण्डिकापरिसमाप्त्यर्थः, स्रुवादिसंस्कारसमुच्चयार्थो वा। तथाच गृह्यान्तरम्। "स्रुवं प्रतप्य दर्भैः संमृज्याभ्युक्ष्य पुनः प्रतप्य निद-ध्यात्"—इति। कर्म्मप्रदीपोऽप्याह।

"तेषां प्राक्शः कुशैः कार्य्यः सम्प्रमार्गो जुह्वता।
प्रतापनञ्च लिप्तानां प्रक्षाल्योष्णेन वारिणा"॥

इति ॥ २८ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजश्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य सप्तमी खण्डिका ॥ ० ॥

## पूर्व्वमाज्यमपरः स्थालीपाकः ॥ १ ॥

पूर्व्वापरदेशत्वादनयोरपि पूर्व्वापरव्यपदेशः। पूर्व्वस्याम् आज्यम् आसादयितव्यम्, अपरस्याञ्च स्थालीपाकः आसादयितव्यः—इति वाक्यशेषः। पूर्व्वं खल्वग्नेरुत्तरतः समासादितयोरनयोरिदानीं क्रियासौकर्य्यार्थमग्नेः पश्चिमतः पूर्व्वापरभावेन समासादनम्—इति बोद्धव्यम्। तथाच गृह्यान्तरम्। "होत्रग्न्योरन्तरा आज्यहविषी आसादयेत् पूर्व्वं चाज्यम्"—इति। इदानीं हविषः पश्चिमतः समासादनादेव वच्यत्याचार्य्यः,—"अथैतद्धविरुच्छिष्टमुदगुद्वास्य"—इति ॥ १ ॥ ० ॥

## पर्य्युक्ष्य स्थालीपाक आज्यमानीय मेक्षणेनोपघातं होतुमेवोपक्रमते ॥ २ ॥

अदिते ऽनुमन्यस्व,—इत्येवमादिना अग्निं पर्य्युक्ष्य स्थालीपाके चरौ आज्यम् आनीय प्रक्षिप्य। "स्रुवमात्रमनादेशे"—इति वचनात् स्रुवमात्रमाज्यं चरौ प्रक्षिप्येत्यर्थः। मेक्षणेन यथोक्तेन उपघातम्—उपघातनामा यथा भवति होमः तथा होतुमेव उपक्रमते प्रारभते।

विध्यर्थे लट्। प्रारभेत—इत्यर्थः। उपघातं होतुम्, उपघातनामानं होमं कर्त्तुम्—इति वा व्याख्येयम्। अन्ये त्वाहुः। उपहत्यावदाय होतुमेवोपक्रमते—इति। एवशब्दोऽवधारणार्थः। होतुमेवोपक्रमते, नान्यत् किञ्चिदभिघारणादिकं कुर्य्यादित्यर्थः। "चरावाज्यमानीय प्रपदविरूपाचौ जपित्वा समिधमादाय जुहुयादेव"—इति भट्टभाष्यम्। तदनेनोपघातहोमे अभिघारणादिकम् आज्यभागौ च न भवतीति सूचयति।

द्विविधः किल होमो याज्ञिकप्रसिद्धः,—उपघातः उपस्तीर्णाभिघारितश्च। चरावाज्यं निःक्षिप्य विनैव अभिघारणादिकं यद्धूयते, स उपघातः. यच्च स्रुचि स्रुवेणाज्येन अभिघार्य्य चरुमवदाय पुनराज्येनाभिघार्य्य हूयते, तदुपस्तीर्णाभिधारितमित्याख्यायते। स्रुवेण स्रुचि यदाज्यं प्रथमं गृह्यते तदुपस्तीर्णं; हविरवदायानन्तरं यदाज्यं दीयते तदभिघारितम्—इति व्यपदिश्यते। यथोपस्तीर्णाभिधारितं होतव्यं तदुपरिष्टाद्व्युत्पादयिष्यति, यथोपघातहोमस्तदत्र सूच्यते। तथाच गृह्यासंग्रहः।

"पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते।
यद्युपघातं जुहुयाच्चरावाज्यं समावपेत्।
मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत्"।

इति। तदेवम्, उपघातः—इति पारिभाषिकी संज्ञा होमविशेषस्य। तस्मात्—हिंसार्थाच्चैककर्मकादिति तृतीयान्तोपपदेन णमा उपघातपदव्युत्पत्तिरप्रामाणिकी। उपघातं जुहुयात्—इत्यादौ

तृतीयान्तोपपदाभावाच । स खल्वयमुपघातहोमः समगनीयचरु-पितृयज्ञचर्व्वोः, अन्यत्रापि बहुदेवत्ये चरौ, अन्वष्टक्यचरौ च भवति । तदाह कर्म्मप्रदीपः ।

"चरौ समगनीये तु पितृयज्ञचरौ तथा ।
होतव्यं मेक्षणेनान्यदुपस्तीर्य्याभिघारितम्" ।

इति ।

"चरौ तु बहुदैवत्ये होमस्तस्योपघातवत्" ।

इति च स्मरणम् । वक्ष्यति चान्वष्टक्ये—"कंसे चरुं सम-वदाय मेक्षणेनोपघातं जुहुयात्"—इति । तत्रान्वष्टक्यपितृयज्ञयोः चिप्रहोमधर्म्मः, समगनीये तु ब्रह्मोपवेशनादितन्त्रधर्म्मः,—इति भट्टनारायणोपाध्यायाः । एतेन, यत् कश्चिदाह । अभावविकल्पो-ऽयमुपस्तीर्णाभिघारितहोमाशक्तावुपघातहोमः,—इति । यच्चापर-श्चाह । उत्तरसूत्रादेव पूर्व्वसूत्र कस्योपघातहोमस्य प्रतिषेधोऽनु-मीयते,—इति । तदुभयमपि पुरुषबुद्धिप्रभवामूलमित्युपेक्षणीयम् । वृषोत्सर्गहोमस्य तु बहुदैवतत्वेऽपि नोपघातत्वम् । तदाह कर्म्म-प्रदीपः ।

"एतेभ्य एव जुहुयान्मेक्षणेनावदाय च ।
स्रुच्याहुतीश्चरोः पृथक् भिन्नेदाज्याभिघारितम्" ।

इति ।

"चतुर्गृहीतं कृत्वाऽऽज्यमाभिर्ऋग्भिः पृथक् पृथक् ।
स्वाहाकारावसानाभिर्जुहुयाद्विधिवत् सदा" ।

इति च ॥ २ ॥ ० ॥

**यद्युवा उपस्तीर्णाभिघारितं जुहुषेत्, आज्यभागा-वेव प्रथमौ जुहुयात् ॥ ३ ॥**

उ वै—इत्यनर्थकौ निपातौ। यदि उपस्तीर्णाभिघारितं यथोक्तलक्षणं होतुमिच्छेत्, तर्हि आज्यभागावेव प्रथमौ जुहुयात्। एवकारोऽवधारणार्थः। यद्युपस्तीर्णाभिघारितं जुहुषेत्, तदैव आज्यभागौ प्रथमौ जुहुयात्—इत्येवमवध्रियते। तस्मादिमावाज्य-भागौ उपघातहोमे न भवतः—इति दर्शयति।

भट्टनारायणस्त्वाह,—'यत्र यत्र ब्रह्मोपवेशनादि, तत्र तत्रो-भयोर्विकल्पयोराज्यभागौ प्रथमौ जुहुयादेव'—इति। सेयं निर्व्वासनिका व्यवस्था। कस्मात्? उपस्तीर्णाभिघारितेनानयोराज्य-भागयोरेकवाक्यत्वात्। प्रमाणविशेषस्य चाभावात्। यद्युपस्तीर्णा-भिघारितं होतुमिच्छेत्, आज्यभागौ जुहुयात्—इति स्पष्टैकवा-क्यता। न खलु भङ्क्त्वा वाक्यमन्यत्र कल्पयितुमुचितौ। आचार्य्य-पुत्रश्च उपघातहोमे साक्षादाज्यभागौ निषिषेध। तच्चोदाहृतम-स्माभिः पूर्व्वस्मिन् सूत्रे। वक्ष्यति चाचार्य्यः—'नाज्यभागौ न स्विष्टकृत्'—इति।

केचिदत्र,—जुहुषेत्—इत्यत्र जुहुयादिति प्रकल्प्य सूत्रद्वयं कल्पयन्ति। तत्र च,—यद्युवा उपस्तीर्णाभिघारितं जुहुयात्—इत्येकम्, आज्यभागावेव प्रथमौ जुहुयात्—इति चापरं सूत्रं मन्यन्ते। यद्युवा—इत्येतस्य च अथवा इत्यर्थमाचक्षते ॥ ३ ॥ ० ॥

कथमाज्यभागौ जुहुयात्? तदुच्यते।

**चतुर्गृहीतमाज्यं गृहीत्वा पञ्चावत्तन्तु भृगूणाम्, अग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दक्षिणतः प्राक्शोज्जुहुयात् ॥ ४ ॥**

चतुर्गृहीतं चतुःकृत्वो गृहीतम् । केन गृहीतम् ? स्रुवेण । कस्मात् ? आज्यग्रहणे तस्य गुणत्वात् । कस्मिन् गृहीतम् ? स्रुचि । कस्मात् ? 'जुहूः प्रदाने गुणभूता'—इति तान्त्रिकसमयात् । "यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोति, यस्य खादिरी न सोऽन्नात् परिच्यवते"—इति च रौरुकीयसमाम्नाये श्रवणात् । तथा चोक्तम् । "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादःस्यात्"—इति । "अनेन गृहीतं जुह्वा जुहोति"—इति च गृह्यान्तरम् । तदेवं स्रुवेण स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा । अश्वालम्भनमालभेत—इत्यादिवत् इहापि प्रत्ययार्थमात्रविवक्षा । कृत्वा—इत्यर्थः । पञ्चावत्तं पञ्चकृत्वो गृहीतं तु भृगूणाम्, अपत्यप्रत्ययस्य लोपात् भृगोरपत्यानामित्यर्थः । 'भृगूणां भृगुगोत्राणाम्'—इति सरलावृत्तिरप्येतमेवार्थमाह । 'भृगुगोत्राणां भार्गवप्रवराणाञ्च'—इति भवदेवभट्टः । 'भार्गवप्रवराणाम्'—इति भट्टनारायणोपाध्यायः। "पञ्चावदानानि पञ्चार्षेयाणाम्"—इति गृह्यान्तरम् । स्मरन्ति चापरे ।

"जामदग्न्या वत्सविदावार्ष्टिषेणस्तथैवच ।
भार्गवाश्च्यवना और्व्वाः पञ्चावत्तिन ईरिताः" ।

इति । तदस्तु किं विस्तरेण ।

सूत्रशेषमिदानीं विव्रियते । तदेवं स्रुचि आज्यं गृहीत्वा

अग्नये स्वाहा—इत्यग्नेरुत्तरभागे प्राग्गतं यथा भवति तथा जुहुयात्। एवं तथैव गृहीत्वा, सोमाय स्वाहा—इत्यग्नेर्दक्षिणभागे प्राग्गतं जुहुयात्। अन्यास्त्वाहुतयोऽग्नेर्मध्यभागे होतव्याः—इत्यर्थादवगम्यते। वक्ष्यति च आचार्य्यः,—"अग्नये स्वाहेति मध्ये जुहुयात्"—इति। तथाच सांख्यायनगृह्यम्। "उत्तरमाग्नेयं दक्षिणे सौम्यं मध्येऽन्याहुतयः"—इति ॥ ४ ॥ ० ॥

## अथ हविष उपस्तीर्य्यावद्यति ॥ ५ ॥

अथानन्तरं हविषश्चरोरवद्यति,—अवदाय चरुं गृह्णातीत्यर्थः। किं कृत्वा? उपस्तीर्य्य—प्रकृतत्वादाज्यस्रुवेणाप्लाव्य, स्रुचम्—इत्यर्थात् ॥ ५ ॥ ० ॥

कथमवद्यति? तदुच्यते;—

## मध्यात् पूर्व्वार्द्धाच्चतुरवत्ती चेद्भवति, मध्यात् पूर्व्वार्द्धात् पश्चार्द्धादिति पञ्चावत्ती चेद्भवति ॥ ६ ॥

मध्यात् चरोर्मध्यप्रदेशात्। पूर्व्वार्द्धात्, चरोरित्येव। चशब्दश्च समुच्चयार्थोलुप्तवत् द्रष्टव्यः। मध्यात् पूर्व्वार्द्धाच्च—इत्यर्थः। तथाच गृह्यान्तरम्। "मध्यात् पूर्वार्द्धाच्च हविषोऽवद्यति"—इति। चतुरवत्ती, चत्वार्य्यवदानानि यस्य, सोयं चतुरवत्ती—इत्युच्यते। चेद् यदि चतुरवत्ती भवत्यवदाता, तर्हि चरोर्मध्यात् पूर्वार्द्धाच्चावद्यति—इति गतेन संबन्धः। एवं खल्वाज्याभिघारणं चर्व्ववदानद्वयं पुनरभिघारणञ्च—इति चत्वार्य्यवदानानि सम्पद्यन्ते। यदि पुनः पञ्चावत्ती भवत्यवदाता, तदा चरोर्मध्यात् पूर्वार्द्धात् पश्चा-

र्द्धात्—पश्चिमार्द्धाच्च अवद्यतीत्यर्थः । इतिशब्दः चशब्दार्थः समुच्चये। इति एवम् अवदानम्—इति वा व्याख्येयम् । मध्यात्,—इत्यत्र मध्यमादिति केचित् पठन्ति। तत्रापि मध्यमस्थानादित्यर्थो न भिद्यते ॥ ६ ॥ ० ॥

अभिघारयत्यवदानानि ॥ ७ ॥

अभिघारयत्याज्यस्रुवेणाप्लावयति अवदानानि यथाश्रुति गृहीतानि। बहुवचनं व्यक्तिभेदापेक्षया, वक्ष्यमाणत्रिहोमपक्षापेक्षया वा ॥ ७ ॥ ० ॥

प्रत्यनक्त्यवदानस्थानान्ययातयामतायै ॥ ८ ॥

अवदानानां स्थानान्यवदानस्थानानि । यस्मात् प्रदेशादवद्यते तदवदानस्थानम् । तान्यवदानस्थानानि मेक्षणक्षतस्थानानीत्यर्थः । बहुवचनं पूर्ववद्वर्णनीयम् । तानि खल्ववदानस्थानानि प्रति, अनक्ति अक्तानि करोति आज्यस्रुवेणाप्लावयतीत्येतत् । किमर्थमनक्ति ? अयातयामतायै। यागायोग्यता यातयामतेत्युच्यते। न यातयामता अयातयामता, तस्यै । एतदुक्तं भवति । मेक्षणक्षतेन यातयामता चरोरुत्पद्यते, आज्याप्लावनेन पुनरयातयामता तस्य भवति—इति। अयातयामतायाः,—इति पाठे, फलमपि हेतुरित्युक्तेर्हेतौ पञ्चमी द्रष्टव्या ॥ ८ ॥ ० ॥

एवं खल्ववदाय,—

अग्नये स्वाहेति मध्ये जुहुयात् ॥ ९ ॥

मध्ये अग्नेरेव ॥ ९ ॥ ० ॥

कति जुहुयात् ? उच्यते,—

**सकृद्वा द्विर्व्वतेन कल्पेन ॥ १० ॥**

एतेन कल्पेनानन्तरोक्तया आवृता,—इत्यादरार्थमुक्तम्। सकृद्वा द्विर्व्वा जुहुयात्। वाशब्दद्वयं तुल्यवद्विकल्पार्थम्। द्वित्वपक्षे च, "एका देया तिस्रो देयाः"—इत्यादिवत् श्रेयसो भूयस्त्वं कल्पयितव्यम्। अन्ये त्वाहुः,—अभावविकल्पोऽयम्, द्वित्वपक्षाशक्तौ सकृत्,—इति ॥ १० ॥ ० ॥

**अथ स्विष्टकृत उपस्तीर्य्यावद्यत्युत्तरार्द्धपूर्व्वार्द्धात् सकृदेव भूयिष्ठं, द्विरभिघारयेत् ॥ ११ ॥**

"प्राक् स्विष्टकृत आवापः"—इति वचनात् अथ प्रधानहोमानन्तरं स्विष्टकृतोऽवद्यति स्विष्टकृदर्थमवद्यति। किं कृत्वा ? उपस्तीर्य्य—आज्यस्रुवेण स्रुचमाप्लाव्य। कथमवद्यति? चरोरुत्तरार्द्धपूर्वार्द्धात्। उत्तरार्द्धश्च पूर्वार्द्धश्च तस्मात्। अपराजिताया दिशः—इत्येतत्। दिगन्तरालानि खलु दिशोर्दिशोर्लक्षणसाङ्कर्य्यात् पदार्थतत्त्वनिपुणा व्यवहरन्ति। तथा चोक्तम्। "तथा दिगन्तरालानि"—इति। अर्द्धशब्दः खल्वत्र विषमांशवाची। अपराजितायादिशश्चेदवद्यते, तर्हि उत्तरार्द्धादप्यवद्यते पूर्वार्द्धादपि—इति शक्यते वक्तुम्। तस्मादपराजिताया दिशः सकृदेकवारमेव भूयिष्ठं बहुतरमवद्यति। अवद्य च द्विरभिघारयेत् वारद्वयमाज्यस्रुवेणाप्लावयेत्। एवं किल चत्वार्य्यवदानानि सम्पद्यन्ते ॥ ११ ॥ ० ॥

यद्यु पञ्चावत्ती स्यात् द्विरुपस्तीर्य्यावदाय द्विरभिघारयेत्॥ १२ ॥

उ—इत्यनर्थकोनिपातः। यदि पञ्चावत्ती भवेत्, तर्हि द्विराज्यस्य अवदाय पुनर्द्विराज्यावयेत् पञ्चावदानसम्पत्त्यर्थम्। यद्यु वा—इति पाठे, उ वा—इति निपातौ, यद्युवा—इति वा निपातसमुदायो-यद्यर्थः ॥ १२ ॥ ० ॥

न प्रत्यनक्त्यवदानस्थानꣳयातयामतायै ॥ १३ ॥

स्विष्टकृतोऽवद्य च अवदानस्थानं यातयामतायै यातयामतानिवृत्तये न प्रत्यनक्ति नाज्यस्रुवेणाज्यावयति। कुतः ? स्विष्टकृद्धोमानन्तरं तेन चरुणा होमान्तराभावात्, होमार्थमेव चाज्यावनस्य विहितत्वात्। तस्मादिदानीं यातयामतायामपि नास्ति क्षतिरिति न प्रत्यनक्त्यमवदानस्थानम्—इत्यभिप्रायः। तदत्र यातयामतायै—इति निवृत्तौ तदर्थ्ये चतुर्थी बोद्धव्या।

यातयामतायाः—इति पाठेऽपि यातयामतां निवर्त्तयितुम्—इति स एवार्थः। अथवा यातयामताया इति हेतौ पञ्चमी। हेतोर्व्वचनात् यत्रायातयामता इष्यते, तत्रावदानस्थानं प्रत्यनक्ति, इदानीन्तु सा नेष्यते—इति न प्रत्यनक्त्यवदानस्थानम्—इति ॥ १३ ॥ ० ॥

अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धपूर्वार्द्धे जुहुयात् ॥ १४ ॥

उत्तरार्द्धपूर्वार्द्धे अग्नेरेव। कृतभाष्यमन्यत् ॥ १४ ॥ ० ॥

## महाव्याहृतिभिराज्येनाभिजुहुयात् ॥ १५ ॥

भूर्भुवः स्वरिति महाव्याहृतयस्तिस्रः प्रसिद्धाः। कर्मप्रदीपोऽप्याह।

"भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः"।

इति। ताभिर्महाव्याहृतिभिस्तिसृभिराज्येन, द्रवद्रव्यकत्वात् स्रुवेण अभिजुहुयात् आहुतित्रयम्। अभिरुपसर्गः। स खल्वयं महाव्याहृतिहोमः चरुहोमात् परस्तात् एव कर्त्तव्यः न तु पुरस्तादपि। कस्मात्? इदानीमेवोपदेशात्। आज्यहोमात्तु पुरस्तात् परस्ताच्च कर्त्तव्यः,—इत्युपरिष्टाद्वक्ष्यति ॥ १५ ॥ ० ॥

## प्राक् स्विष्टकृत आवापः ॥ १६ ॥

प्राक् पूर्वं स्विष्टकृतः स्विष्टकृद्धोमात्, आ उप्यते—इत्यावापः प्रधानहोमः कर्त्तव्यः,—इति सूत्रशेषः। एवञ्च मुख्यहोमे लक्षते यदि चरुर्नष्टो दुष्टो वा भवति तदाऽन्यः पाच्यः, मुख्ये कृते चेन्नाशदुष्टौ स्यातां तदा आज्येनैव स्विष्टकृद्धोमः—इति सरला।

अत्र ब्रूमः। अर्थकर्मत्वे स्विष्टकृद्धोमस्य तत्र च शेषस्य प्रतिपादने सत्येतदेवं स्यात्। न त्वेवम्। कुतः? "एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्"—इति सिद्धान्तात् स्विष्टकृद्धोमस्य प्रतिपत्तित्वात्। प्रतिपत्तेश्च प्रतिपाद्याभावे लोप एव आकरे निरूपितः। यजतित्वेऽपि स्विष्टकृतः प्रस्तरप्रहरणवत् प्रतिपत्तित्वं न विरुध्यते। शेषश्रुतिश्च न शेषिणं प्रयोजयति। न चेत् शेषिणं प्रयोजयति; न तरां तत्प्रतिनिधिमपि। शेषप्रतिनिधिं तर्हि प्रयोजयतु? न—इति ब्रूमः। कस्मात्? विद्यमानसंयो-

गादेव। न खल्वेतत् शेषमपि प्रयोजयितुं शक्नोति, प्रतिपत्तेः प्रतिपाद्यप्रयोजकतायामसामर्थ्यात्। सति प्रतिपाद्ये खल्वियं प्रवर्त्तते। अन्यथा अर्थकर्मणः प्रतिपत्तेर्व्विशेषो न स्यात्।

तस्मात् यथा,—सर्व्वावदानेन शेषाभावात् शौवाल्यात् स्विष्टकृदिड़ं नेज्यते साकंप्रस्थाय्ये च, तद्वदत्रापि शेषापचारे शेषाभावस्याविशेषात् स्विष्टकृन्न यष्टव्यो भवति। अतएव,—मुख्यमात्रोपयोगिन्यपि व्रीह्यादौ सति तदेवादेयं तत्र लोपएव शेषकार्य्याणां स्विष्टकृदादीनाम्, न तु तन्निष्पादनसमर्थमपि नीवारादिकम्—इति सिद्धान्तः। अतएव च,—स्विष्टकृदर्थमवत्तस्य हविषोऽपचारे न पुनरवदातव्यम्, अपि तु प्रतिपाद्यमानाभावात् लोप एव स्विष्टकृतः स्यात्—इति षष्ठाध्याये निरूपितम्। तथा चोक्तम्। "अपि वा शेषभाजां स्यात् विशिष्टकारणत्वात्"—इति। कथमन्यथा तत्रापि अन्यत् न प्रतिनिधीयते!। एवं खल्वाचार्य्याणां लोपवचनं प्रलापमात्रं स्यात्। तस्मान्न किञ्चिदेतत्।

मुख्यहोमार्थमवत्ते च हविषि नष्टे दुष्टे वा खल्वाज्येन होतव्यं न पुनरवदातव्यं, न वा अन्यत् पाच्यम्। कुतः? "निर्द्देशाद्वा अन्यदागमयेत्"—इति सिद्धान्तात्। "यस्य सर्व्वाणि हवींषि नश्येयुर्दुष्येयुर्व्वा अपहरेयुर्व्वा, आज्येन ता देवताः परिसंख्याय यजेरन्"—इति च हविषोनाशे आज्यविधानात्। "तत्र सर्वशब्दस्य निमित्तविशेषणत्वेनाविवक्षितत्वात् नाशमात्रे सर्वत्राज्यस्य विधिः"—इत्यधिकरणमालायां माधवाचार्य्याः।

याश्च प्रायश्चित्ताहुतयस्ता अपि स्विष्टकृद्धोमादर्व्वागेव होतव्याः—

इत्येके मन्यन्ते। तदसङ्गतम्। तासामप्रधानत्वात्। आगन्तुकानामन्तएवाभिनिवेशस्य न्याय्यत्वाच्च। आगन्तुकाः खल्वेता आहुतयः प्रायश्चित्तरूपत्वात्। प्रायश्चित्ताहुतयो हि प्रकृतहोमवैगुण्यदोषोपशमनाय विधीयन्ते,—इति प्रकृतहोमात् परत एव होतुमुचिताः। महाव्याहृतिहोमान्तेनैव हि प्रकृतहोमनिष्पत्तिः। तस्मात् महाव्याहृतिहोमं कृत्वा कर्म्मापवर्गविहितां समिधमाधाय प्रायश्चित्ताहुतयो होतव्याः। ताः खल्वेताः हविषोऽनादेशादाज्येन आज्यतन्त्रेण हूयन्ते।

स खल्वयं प्रायश्चित्तहोमः,—व्यस्तसमस्तमहाव्याहृतिभिर्वा, अज्ञातम्—इत्यादिमन्त्रेण वा, प्राजापत्यमन्त्रेण वा कर्त्तव्यः। कुतः? "तस्मादेतामेव जुहुयात् अपिवाऽज्ञातं यदनाज्ञातम्"—इत्यवमादिकायां श्रुतौ विकल्पोपदेशात्। व्यक्तमाह कर्म्मप्रदीपः।

"यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्।
चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा॥
अपिवाऽज्ञातमित्येषा प्राजापत्याऽपिवाऽऽहुतिः।
होतव्या, त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः"॥

इति। तदत्र त्रिविकल्पः—इत्यनेन कल्पान्तरस्य प्रतिषेधोऽवगम्यते। केचित् पुनरत्र, "पाहि नोऽग्न एनसे स्वाहा"—इत्यादिकं प्रायश्चित्तहोममाचक्षते। तदसारम्। इह तस्यानुपदेशात्। 'यदपि शाट्यायनकं कुग्रन्थान्तरमपपाठभूतमधीयते। तदप्यप्रमाणम्। अनार्षत्वात्। परिशिष्टमध्यान्तःपातित्वासम्भवाच्च',—इति भट्टनारायणोपाध्यायाः। शाट्यायनहोमस्य समूलत्वेऽपि शास्त्रान्तरीयत्वम्

—इति तलकारः। शाट्यायनपठितोहोमः शाट्यायनिनां स्यात् न कौथुमादीनामिति युक्तमस्य शाख्यन्तरीयत्वम्। कौथुमादीनान्तु कर्म्मप्रदीपोक्त एव प्रकार इति नैवात्र किञ्चिद्वक्तव्यमस्ति।

एतत् सर्व्वप्रायश्चित्तं चित्रहोमवर्ज्जं सर्व्वत्रैव स्यात्—इति भट्ट-भाष्यम्। श्रुतिश्चात्र भवति। "यच्चावगतं यच्चानवगतं सर्व्वस्यैव प्रायश्चित्तिः"—इति ॥ १६ ॥ ० ॥

**गणेष्वेकं परिसमूहनमिध्मो वर्हिः पर्य्युक्षणमाज्य-माज्यभागौ च ॥ १७ ॥**

गणेषु एकदा क्रियमाणेषु अनेकहोमेषु एकं परिसमूहनम्। एकशब्दः परस्तादपि प्रत्येकमनुषञ्जनीयः। अनेनैव सूत्रशेषो-व्याख्यातः। प्रत्येकं तन्त्रविधाने प्राप्ते यानि तन्त्रेण कर्त्तुं शक्यन्ते, तेषां तन्त्रभाव इहोपदिश्यते। परिकीर्त्तनञ्च परिसमूहनादीना-मुदाहरणप्रपञ्चार्थं न परिसंख्यानार्थम्। तेन उलूखलमुषलादि-कमपि एकमेव भवतीति द्रष्टव्यम्। गणेषु—इति सामान्यतोऽभि-धानात् विभिन्नदेवताकेष्वपि होमेषु एकदा क्रियमाणेषु एकमेव परिसमूहनादिकम्—इत्यवगम्यते। तथाच गृह्यान्तरम्।

"पाकयज्ञान् समासाद्य एकाज्यानेकवर्हिषः।
एकस्विष्टकृतः कुर्य्यान्नानाऽपि सति दैवते"॥

इति ॥ १७ ॥ ० ॥

**सर्व्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोति ॥ १८ ॥**

गणेषु—इत्येव। ऋजुरत्रार्थः। सकृदेकवारं न पृथक् पृथ-

गित्यभिप्रायः। उपलक्षणमेतत् महाव्याहृत्यादयपि सकृदेव भवति— इति सरला ॥ १८ ॥ ० ॥

## हुत्वैतन्मेक्षणमनुप्रहरेत् ॥ १९ ॥

एतत्—इति सन्निकर्षातिशयात् सौविष्टकृतं ब्रूमः। एतत् सौविष्टकृतं हुत्वा मेक्षणमनुप्रहरेत् अग्नौ क्षिपेत्। सेयं कर्म्मार्थस्य मेक्षणस्य अनन्तरमेव कर्म्मणः प्रतिपत्तिराम्नाता। अन्ये त्वाहुः,— हुत्वेति वचनात् महाव्याहृतिभिरपि हुत्वा मेक्षणमनुप्रहरेत् न स्विष्टकृद्धोमादनन्तरमेव—इति। स खल्वयं मेक्षणप्रक्षेपः अन्यत्रह्म-केषु होमेषु प्रत्येतव्यः। कुतः? अत्र चरुशेषस्य तस्मै प्रतिपादयि-तव्यत्वस्य वक्ष्यमाणत्वात्, अन्यत्र च मेक्षणेनैवोद्धृत्य तद्भोजनस्य सूचणात्। न चानुप्रहृतेन मेक्षणेनोद्धरणं शक्यं कर्त्तुम्। तस्माद् यथोक्त एवार्थः। यद्यप्यनुप्रहरतिर्यजतिवचनो दृष्टः, "अष्टावष्टौ शकलान्याहवनीयेऽनुप्रहरेयुः—इति सूत्रकारवचनात्। तथापि प्रस्तरप्रहरणवत् प्रतिपत्तिरेवासौ ॥ १९ ॥ ० ॥

## प्रक्षाल्य वैनेनोद्धृत्य भुञ्जीत ॥ २० ॥

प्रक्षाल्य वा मेक्षणम्, एनेन एतेन मेक्षणेनोद्धृत्य चरुशेषं भुञ्जीत यजमानः। एनः प्रकृत्यरमेतदर्थः। एतेन—इति वा पाठः। अन्ये पुनर्—एनं प्रकृत्यन्तरमविद्वांसो भाषन्ते,—प्रक्षाल्य वाऽनेन,— इति पाठे प्राप्ते छान्दसोऽयं प्रयोगः,—इति। यत्र हौत्रं ब्रह्मत्व-मुभयमपि स्वयमेव करोति, सोऽस्य विषयः। यत्र च अन्यो ब्रह्मा भवति, तत्र वक्ष्यति,—अथैतद्धविरुच्छिष्टम्—इत्यादि ॥ २० ॥ ० ॥

न स्रुवमनुप्रहरेदित्येक आहुः ॥ २१ ॥

स्रुवमग्नौ न क्षिपेदित्येके आचार्य्या वदन्ति। अस्मादेवाव-गम्यते,—स्रुवमग्नौ क्षिपेत्—इत्यन्ये वदन्ति—इति। तस्मात् स्रुवमग्नौ क्षिपेद्वा न वा क्षिपेदिति विकल्पः ॥ २१ ॥ ० ॥

आग्नेय एवानाहिताग्नेरुभयोर्दर्शपौर्णमासयोः स्थालीपाकः स्यात् ॥ २२ ॥

अनाहिताग्निः श्रौताग्निरहितः स्मार्त्ताग्निरित्येतत्। ऋज्वन्यत् ॥ २२ ॥ ० ॥

आग्नेयोवाऽग्नीषोमीयोवाऽऽहिताग्नेः पौर्णमास्याम् ॥ २३ ॥

ऋज्वर्थं सूत्रम् ॥ २३ ॥ ० ॥

ऐन्द्रो वैन्द्राग्नो वा माहेन्द्रो वा अमावस्यायाम् ॥ २४ ॥

आहिताग्नेरेव। ऋजुरक्षरार्थः। अत्रैके विनिवेशविकल्पमाहुः,—ऐन्द्रमाहेन्द्रौ सोमयाजिनः, ऐन्द्राग्नस्त्वसोमयाजिनः। तत्रापि एकेन इष्टवत ऐन्द्रो बहुभिरिष्टवतो माहेन्द्रः—इति। अन्ये तु—इच्छा-विकल्पमाहुः ॥ २४ ॥ ० ॥

अपिवाऽऽहिताग्नेरप्युभयोर्दर्शपौर्णमासयोराग्नेय एव स्यात् ॥ २५ ॥

ऋज्वर्थम् ॥ २५ ॥ ० ॥

**समिधमाधायानुपर्य्युक्ष्य यज्ञवास्तु करोति ॥ २६ ॥**

समिधमाधायानुपर्य्युक्षेत्‌कार्थम् । तदिदमभिधानं क्रमार्थं भवति । कथन्नाम? समिधमाधायानुपर्य्युक्ष्य अनन्तरं यज्ञवास्तु—एतन्नामकं कर्म्म करोति ॥ २६ ॥ ० ॥

कथं करोति? उच्यते।

**ततएव वर्हिषः कुशमुष्टिमादायाज्ये वा हविषि वा त्रिरवदध्यादग्राणि मध्यानि मूलानीत्यक्तꣳरिहाणा व्यन्तु वय इति ॥ २७ ॥**

ततस्तस्मादास्तृतादेव वर्हिषः—इति नियमादन्यद्वर्हिर्व्वच्छिद्यते। शेषादेव वर्हिषः—इति कुतो न वर्द्धते? उच्यते। प्रधानकर्म्मापवर्गविहितमिदं प्रतिपत्तिरेव भवितुमुचितम्। आस्तृतानां वर्हिषामिदानीं प्रतिपिपादयिषितत्वात्। प्रतिपत्तिप्राये वचनाच्च। व्याख्यातारस्त्वेवमेव प्रतिपन्नाः। तच्च वक्ष्यामः। 'कुशमुष्टिम्' अनियतसङ्ख्याकम्, आदाय गृहीत्वा आज्ये यथोक्ते वा, हविषि चरौ वा त्रिरवदध्यात् वारत्रयमञ्जयेत् अग्राणि मध्यानि मूलानि—इति। प्रकृतं कुशमुष्टिम् अग्रादिस्थानत्रयेषु त्रिरञ्जयेत्—एकैकस्थानं प्रत्येकैकम् अञ्जनम्—इत्यर्थः। अक्तं रिहाणा व्यन्तु वयः—इत्यनेन मन्त्रेण वारत्रयं पठितेन। कुतः? प्रधानानुयायित्वात् गुणानाम्।

"कर्म्मावृत्तौ तु मन्त्रस्याप्यावृत्तिर्गृह्यकर्म्मणि"।

इति चाभियुक्तवचनात्। यत्र खल्वनावृत्तिरिष्यते मन्त्राणां, प्रायेण तत्रोत्तरत्र तूष्णीमिति करोति, 'सकृद् यजुषा द्विस्तूष्णीम्'—इत्येवमादौ ॥ २७ ॥ ० ॥

अथैनमद्भिरभ्युक्ष्याग्नावप्यर्जयेत्,—यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा पशूनस्माकं माहिंसीरेतदस्तु हुतन्तव स्वाहेति ॥ २८ ॥

अथानन्तरमेवाविमुञ्चन्नेनं कुशमुष्टिमद्भिरभ्युक्ष्य अग्नौ अप्यर्जयेत् क्षिपेत् दाहयेद्वा। अपिरुपसर्गः। अपवर्जयेत् इति पाठेऽपि स एवार्थः। यः पशूनाम् इत्यनेन मन्त्रेण ॥ २८ ॥ ० ॥

एतद् यज्ञवास्त्वित्याचक्षते ॥ २९ ॥

तत एव बर्हिषः इत्यारभ्य यदुक्तं, तदेतत् कर्म्म यज्ञवास्तु—इत्याचक्षते आचार्य्याः। किमर्थं पुनरिदमुच्यते? उच्यते। यज्ञवास्तु करोति इत्युक्ते, किमिदं यज्ञवास्तु इति न ज्ञायते, तदिदमनेन निगमनेन ज्ञाप्यते। अवचने खल्वेतस्य हविःशेषार्पणमपि यज्ञवास्तु इत्याशङ्क्येत। तदिदं प्रतिपत्तिकर्म्म। कृतार्थानां बर्हिषामिह विनियोगाम्नानात्,—इत्याहुः। तेषां, नष्टेषु बर्हिःष्विदं न भवितुमर्हति। कस्मात्? प्रतिपत्तेः प्रतिपाद्यप्रयोजकत्वाभावात्।

ननु यज्ञवास्तु इति समाख्यालभ्यार्थसिद्ध्यर्थं बर्हिरन्यदुपादीयताम्? अन्यथा खल्ववास्तुर्यज्ञः स्यात्। उच्यते। काममवास्तुर्यज्ञः स्यात्। न प्रतिनिधिः। न खल्वेतदर्थकर्म्म। प्रतिपत्तीनाञ्च प्रतिपाद्याभावे लोपमवोचाम। अपिच। एवमप्यवास्तुर्यज्ञः स्यादेव। कुतः? तत एव बर्हिषः कुशमुष्टिमादाय यद्धूयते, तदेतत् यज्ञवास्त्वाचक्षते। तस्मादन्यस्मिन् बर्हिष्युपादीयमानेऽपि न स होमो यज्ञवास्तुर्भवति। समाख्यालभ्यार्थसिद्ध्यर्थम् इति चेत्। इति

चेद्भवान् पश्यति समाख्यालभ्यार्थसिद्ध्यर्थमन्यदपि वर्हिरुपादेयम्—इति। तत्र ब्रूमः। नासामर्थ्यात्। नैतत् सम्भवति। कुतः? तदुच्यते। नैव समाख्या वदति अन्यद्बर्हिरुपादेयम्—इति। समाख्यालभ्यार्थसिद्ध्यर्थमनुमीयते खल्वेतत्। प्रत्यचन्तु आस्तृतमेव वर्हिः। न च प्रत्यचं नियममुपरुध्य आनुमानिकमन्यद्बर्हिः शक्यमुपादातुम्। अनुमानस्य प्रत्यचबाधायामसामर्थ्यात्। दुर्ब्बला च समाख्या न बलवत्तरं वाक्यं बाधितुं प्रभवति। नियमः खल्वेवमुपरुध्येत।

अथैवम्, एतद् यज्ञवास्त्वित्याचचते—इति पुनः सूत्रणमनर्थकम्? इति चेत्। काममनर्थकं भवतु न तु शक्नोत्यन्यद्वदितुम्। सकृदुच्चरितेऽप्यस्य यावानर्थः शतकृत्वोऽप्युच्चारणे तावानेव प्रतीयते, न ततोऽधिकः। समाख्या च पूर्व्वेणापि वाक्येनावगम्यते—इति भवतामपि पुनः सूत्रणमनर्थकमेव। तदेतत् पुनरुपादानं निगमनरूपम् इत्यभिहितमस्माभिः। तत् कुत एवानर्थक्यमस्य। अत्रास्तुर्यज्ञः स्यात्? इति चेत्। नैषदोषः। स्तुत्यर्थत्वात् समाख्यायाः। न खल्वियं 'यज्ञस्य वेश्मभूः'। कथन्नाम? एवमयं होमो यदसौ यज्ञवास्तुरिति। प्रत्यचन्तु यज्ञस्यागो यजमाने वर्त्तते, विष्णुश्च न कस्मिंश्चित्। स्विष्टकृदादिवच्चैतदवगन्तव्यम्। यथा शोभनाभिलषितकारित्वस्य समाख्यालभ्यत्वेऽपि प्रतिपत्तिरेवासौ। यथा वा व्यतिरेके निन्दावचनेऽपि तत्रापि प्रतिपत्तिरेव श्राद्धे शेषभोजनम्। एवमिहापि प्रतिपत्तिरेवैतदित्यविरुद्धम्। स्तुत्यैव केवलप्रतिपत्तित्वमस्य निरस्यते,—इति चेत्, श्राद्धशेषभोजनादावपि निरस्यताम्। तथाच तत्राप्यपचारे प्रतिनिधिरापद्येत। न चैवमिष्यते। तथात्वे-

ऽपि वा न प्रतिनिधिः, नियमस्यार्थवत्त्वात् । तथापि किं स्तुतेः प्रयोजनम् ?—इति चेत् । अफलायां प्रतिपत्तौ कथं प्रवर्त्तेत—इति प्ररोचनमेव—इत्यस्तु किं विस्तरेण । अन्ये तु मन्यन्ते,—यद्यप्येतत् प्रतिपत्तिरेव, तथापि एतद् यज्ञवास्त्वित्याचक्षते,—इति गुणार्थं पुनरुपादानात् नात्यन्तमिदं प्रतिपत्तिरिति दर्शयति । तस्मादपचारेऽप्यास्तृतानां वर्हिषां समाख्यालभ्यार्थसिद्ध्यर्थमन्यदपि वर्हिराहाय होतव्यम् । इतरथा अवास्तुर्यज्ञः स्यात्—इति ।

वयन्तु पश्यामः । नासौ प्रतिपत्तिः, किन्त्वर्थकर्मैवैतत् । कुतः? प्रतिपत्तितायां प्रमाणाभावात् । यद्यास्तृतमेव वर्हिरिह प्रतिपाद्येत, भवेदियं प्रतिपत्तिः । न तु प्रतिपाद्यते । किन्तु स्तृतशेषाद्वर्हिषः कुशमुष्टिरादीयते । कथं ज्ञायते? व्यवहितत्वात् स्तृतस्य वर्हिषः । सन्निहितत्वाच्च स्तृतशेषस्य । निर्द्देशसामान्याच्च । किमिदं निर्द्देशसामान्यम्? उच्यते । "तत एव वर्हिषः प्रादेशमात्रे पवित्रे कुरुते" इति पूर्व्वं निर्द्दिष्टम् । तत्र च स्तृतशेषादेव वर्हिषः,—इति व्यवस्थापितम् । तद्वदिहापि निर्द्दिश्यते "ततएव वर्हिषः कुशमुष्टिमादाय"—इति । तदिदं निर्द्देशसामान्यम् । तस्माच्च प्रतिपद्यामहे पूर्व्ववदिहापि स्तृतशेषमेव वर्हिरभिप्रेतम्,—इति । ततएव वर्हिषः,—इति निर्द्देशे हि स्तृतशेषमेव वर्हिः पूर्व्ववदिहाप्यागच्छति हृदयम् । आगच्छति चेत्, न युज्यते विना कारणमुत्स्रष्टुम् ।

स्तृतानां वर्हिषामिदानीं प्रतिपिपादयिषितत्वात्,—इति चेत् । इति चेत् भवान् पश्यति स्तृतानि वर्हींषि इदानीं प्रतिपिपादयिषितानि । एतस्मात् कारणात् हृदयमागतमपि स्तृतशेषं

बर्हिस्तत्सुज्यते,—इति । नैतत् । प्रमाणाभावात् । न हि स्तृतानि बर्हींषि इदानीं प्रतिपिपादयिषितानि,—इत्यत्र किञ्चित्प्रमाणमस्ति। प्रतिपत्तिप्राये वचनादिति चेत् । न । असिद्धेः । कथमसिद्धिः ? आग्नेयादीनामप्रतिपत्तीनां सन्निहिततरत्वात् । किञ्च । प्रतिपत्तिप्राये वचनात् खल्वानुमानिकं प्रतिपत्तित्वं परिचिकल्पयिषितम् । तच्च न्यायविरोधात् विनियुक्तविनियोगापत्तेर्वचनविरोधाच्च नार्हति भवितुम्। तथाच न्यायः। "विरोधे च श्रुतिविशेषादव्यक्तः शेषे"—इति । तथा गृह्यासंग्रहः ।

"स्तृतेभ्यो न प्रचिन्वीयात् यातयामं स्तृतं स्तृतम् ।
स्तृतशेषात्ततो गृह्य यज्ञवास्तुक्रिया तथा" ।

इति । तस्मात् स्तृतशेषादेव बर्हिषः कुशमुष्टिमादाय,—इति व्याख्येयम् । यज्ञवास्तुक्रियां कृत्वा चाज्येन पूर्णाहुतिर्होतव्या । तदपि स एवानुपदमाह ।

"यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्मणा ।
आज्यधारामविच्छिन्नां जुहुयात् सार्व्वकामिकीम्" ।

इति । पूर्णाहुतिरियमिति कुतो ज्ञायते ? सार्व्वकामिकीमिति वचनात्। "पूर्णाहुत्या सर्व्वान् कामानाप्नोति"—इति हि ब्राह्मणम् ॥ २९ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजश्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य अष्टमी खण्डिका ॥ ० ॥

प्रथमप्रपाठके नवमी खण्डिका ।

अथैतद्धविरुच्छिष्टमुदगुद्वास्योद्धृत्य ब्रह्मणे प्रयच्छेत् ॥ १ ॥

अथेत्यानन्तर्य्यार्थम् । प्रदक्षिणप्रणीताविमोकोदपात्रपूरणानि कृत्वा अनन्तरम्—इति भट्टभाष्यम् । 'एतत्' अभिप्रेतं, हविः, उच्छिष्टम् अवशिष्टम्, उदगुद्वास्य । एतस्मादवगम्यते—होमकाले होत्रग्न्योरन्तरा हविषः समासादनम्—इति । उद्धृत्य पात्रान्तरे कृत्वा ब्रह्मणे प्रयच्छेत् प्रदद्यात् । एतत्—इति कतमदिह अभिप्रेयते ? समशनीयनवयज्ञवास्तुपशमनादिचरुभ्योऽन्यत्--इति ब्रूमः । कुतः ? तत्र तत्र अन्यस्या अन्यस्याः प्रतिपत्तेरुपदेशात् । एतच्चावसरे प्रदर्शयिष्यामः । अनर्थकं तर्हि । तत्र तत्र प्रतिपत्त्यन्तरविधानादेव हविरुच्छिष्टस्य ब्रह्मणे प्रदानं न भविष्यतीति चेत् । न । एतदित्य नुक्तौ तत्र तत्र प्रतिपत्तिद्वयमाशङ्कीत कश्चिदित्येतदित्युक्तम् । उच्छिष्टग्रहणेनाप्राधान्यं द्योतयन् प्रतिपत्तित्वमस्य ज्ञापयति । तेनाप्रदत्तएवैतस्मिन्नष्टे दुष्टे वा प्रदानार्थं नान्यद्धविरुत्पाद्यमिति । अथमप्यर्थ एतदित्यनेनोपोद्बल्यते । स्वयमुभयकरणे तु चरुशेषं स्वयमेव भुञ्जीत, ब्राह्मणन्त्वन्नान्तरेण तर्पयेदिति वृद्धाः ॥ १ ॥ ० ॥

किं ब्रह्मणे चरुशेषस्य प्रदानमात्रम् ? । न । किन्तर्हि ?—

## तं तितर्पयिषेत् ॥ २ ॥

तं ब्राह्मणं तर्पयितुमिच्छेत् । यथा असौ तृप्यति, तथा कर्त्तव्यम्—इत्यर्थः । तर्पयेत्—इति वक्तव्ये मनोविशुद्धिप्रदर्शनार्थं तितर्पयिषेत्—इत्यभिहितम् । कथं नाम ? श्रद्धादिगुणवता मनसा ब्राह्मणं तर्पयितुमिच्छेत् तत्कृतमतिशयविशेषं जानानः । तथाच स्मरणम् ।

"श्रद्धाविधिसमायुक्तं कर्म्म यत् क्रियते नृभिः ।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते"।

इति ।

"देशकालाश्रमश्रद्धद्रव्यदातृमनोगुणाः ।
सुक्ष्मस्यापि दानस्य फलातिशयहेतवः" ।

इति चैवमादि । श्रद्धारहितस्य खल्वन्नमभोज्यमाहुराचार्य्याः । तच्चेह विस्तरभयान् न प्रस्तूयते ॥ २ ॥ ० ॥

कस्मात् पुनः कारणात् ब्राह्मणः तर्पणे प्रयत्नातिशयः उपदिश्यते ? तदुच्यते,—

## ब्राह्मणस्य तृप्तिमनु तृप्यामीति ह यज्ञस्य वेदयन्ते ॥ ३ ॥

ब्राह्मणस्य तृप्तिम्, अनु पश्चात् लक्षीकृत्य वा, अहं तृप्यामि,—ब्राह्मणस्य तृप्तौ जातायां मम तृप्तिर्भवति—इत्येतत् । इति एवं ह किल यज्ञस्य अभिप्रायं वेदयन्ते ज्ञापयन्त्याचार्य्याः । एतस्मात्

कारणात् तं तितर्पयिषेत्। सोऽयं ब्राह्मणशब्दो ब्रह्मपरो वर्णनीयः, उपक्रमानुग्रहार्थम् ॥ ३ ॥ ० ॥

यस्मादेवं ब्रह्मणस्तर्पणम्, तस्मात् चरुशेषस्य अपचारे तेन वा तृप्त्यसम्भवे, अन्येनापि अन्नेन तं तर्पयेत्—इत्याह,—

अथ यदस्यान्यदन्नमुपसिद्धꣳ स्यात् ॥ ४ ॥

अथेत्यानन्तर्य्यार्थम्। अथ अनन्तरमेव भोजयेत् नात्मीयं भोजनकालमपि प्रतीक्षेत—इत्यर्थः। अस्य यजमानस्य यत् किञ्चिदन्यदन्नम्, उप समीपे तत्कालस्य सिद्धं निष्पन्नं स्यात् भवति, तेन निषिद्धातिरिक्तेन तं तितर्पयिषेत्—इति गतेन सम्बध्यते। प्रदानस्य प्रतिपत्तित्वेऽपि वचनप्रमाण्यादन्नान्तरमुपादेयम्। चरुशेषप्रदानादनन्तरमन्यदप्यन्नं प्रयच्छेत्—इति वा वर्णनीयम् ॥ ४ ॥ ० ॥

अथ ब्राह्मणान् भक्तेनोपेप्सेत् ॥ ५ ॥

अथ स्वपाकसिद्ध्यनन्तरं ब्राह्मणान् भक्तेन अन्नेन उपेप्सेत् तर्पयितुमिच्छेत्। उपेत्ययमुपसर्गः। अत्रापि गौरवं, मनसोविशुद्धिप्रदर्शनार्थम्। अपवर्गे तावदभिरूपभोजनं विहितम्, तदत्र कृतेन ब्रह्मतर्पणेनैव कृतं मा मंस्त,—इति पुनरिदमसूत्रयदाचार्य्यः ॥ ५ ॥ ० ॥

पूर्णपात्रो दक्षिणा तं ब्रह्मणे दद्यात् ॥ ६ ॥

पूर्णपात्रः पूर्णपात्रम्। पुंस्त्वं छान्दसम्। तदिदं पूर्णपात्रं दक्षिणा—इत्युत्सर्गः। तं ब्रह्मणे दद्यात्। दक्षिणाग्रहणं ब्रह्मणोऽभावेऽप्यन्यस्मै दानार्थम्। कथं नाम? दक्षिणेयम्—इति कृत्वा स्वयं

कर्म्मकरणेऽप्यन्यस्मै अवश्यं देया। व्यतिरेके वैगुण्यापत्तेः। "इतो-यज्ञस्तद्दक्षिणः"—इति हि स्मरन्ति। तदाह कर्म्मप्रदीपः।

"ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता।
कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्।
विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत्।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्"।

इति। पूर्णपात्रादिका,—इत्यादिपदात् दक्षिणाविशेषालाभे मूलादिकमपि संगृह्णाति। तथाच मैत्रायणीयपरिशिष्टम्। "दक्षिणाऽलाभे मूलानां भक्ष्याणां दक्षिणां ददाति" इति। तदत्र, यत्र या—इति सर्व्वनाम्ना व्याप्त्यवगमात् कर्म्मान्ते—इति च सामान्याभिधानात्, दक्षिणामात्रमेव ब्रह्मणे देयम्—इत्युपदिशति। न च प्रधानकर्मदक्षिणानामन्यस्मै दानं शिष्यते—इति विशेषोपदेशविरहादपि ब्रह्मण एष तेषां देयता पर्य्यस्यति। स खल्वयमाचार्य्यस्यास्पष्टोऽभिप्रायः कर्म्मप्रदीपकृता स्पष्टीकृतः—इत्या-स्थेयम्।

न चैतत्सूत्रानुसारात् कर्म्मान्त—इति ब्रह्मसाध्यहोमान्तपरम्—इतियुक्तम्, एतद्विवरणरूपत्वात्तस्य। न ह्यत्रापि होमदक्षिणेयम्—इत्युच्यते, किन्तु प्रकरणादनुमीयते, वाक्यन्तु अविशेषाद्ब्रह्मणे दक्षिणादानमुपदिशति। दुर्बलञ्च प्रकरणं वाक्यात्—इत्यवोचाम। अपिच। इयमपि दक्षिणा प्रधानस्यैव कर्मणः। परमेतत् होमात्मकम्—इति नैतावता किञ्चिदपचीयते। तथात्वे वा दर्शादियागप्रस्तावात् तस्यैव दक्षिणा ब्रह्मणे देया—इत्यापतति।

स चायं पर्य्यनुयोगः सामान्याभिधानबलादेव परिहर्त्तव्यः । स चान्यत्रापि समानः । विद्ध्याद्धौत्रम्—इति तु होमप्रस्तावादा प्रायेण गृह्यकर्मणां सहोमकत्वाद्वा समाम्नातम् । न खल्वन्यत्रैतत् निषिध्यते । एकस्मिन्नुपदेशस्य विशेषोपदेशविरहे अन्यस्मिन्नपि कल्पनीयः—इति निबन्धारोमन्यन्ते । तस्मात् अन्यैरपि ऋत्विग्भि-र्व्विभज्यैव दक्षिणा ग्रहीतव्या । न्यायस्याविशेषात् ।

अपिच । सहोमके कर्मणि ब्रह्मणः सद्भावात् कर्मदक्षिणायाश्च ब्रह्मणे देयत्वसूत्रणात् होतुः किं तत्र दक्षिणा नास्त्येव?—इत्या-शङ्कायां, 'विद्ध्याद्धौत्रमन्यश्चेत्'—इति वचनारम्भो न्याय्य एव,—इति न किञ्चिदनुचितम्। स खल्वयमुत्सर्गोविधिरिति यत्र स्पष्ट-मन्यस्मै आचार्य्यादिकाय दक्षिणाविशेषस्य दानमुपदिश्यते, तत्र नैतत् प्रवर्त्तते। अब्रह्मके तु कर्मणि सुतरामन्यस्मै दक्षिणा दातव्या। ब्रह्मणे—इति कर्मकारयितुपलक्षणत्वे तु प्रागेव नानुपपत्तिः। सेयं भट्टनारायणादीनां बहूनामनुमता व्यवस्था। तत्त्वकारस्तु,—होमदक्षि-णैव ब्रह्मणे देया, कर्म्मान्ते—इति ब्रह्मसाध्यहोमान्तपरम्—इत्येक-त्राभिदधानः, कर्म्मान्ते—इति यथाश्रुतमेव ब्रह्मणे—इति कर्मकारयि-त्रुपलक्षणम्—इति पुनरन्यत्र ब्रुवाणः शास्त्रार्थमाकुलयाञ्चकार ।

यदाऽप्यन्यस्मै दक्षिणा दीयते, तदाऽपि कुलर्त्विजे गुरवे वा देया, तयोः प्रतिग्रहवैमुख्यादिना ग्रहणासम्भवे बहुतरायां वा दक्षिणायामन्यस्मै अपि दातुमिच्छायां तदनुमत्या, दूरस्थत्वे च तयोस्ताभ्यामुद्दिश्य मनसा दत्वैव देया। तदप्याह कर्मप्रदीप एव।

"कुलर्त्विजमधीयानं सन्निकृष्टं गुरुं तथा।

नातिक्रमेत् सदा दित्सन् यदीच्छेदात्मनोहितम् ।
अहमस्मै ददानीति एवमाभाष्य दीयते ।
नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि ।
दूरस्थाभ्यामपि द्वाभ्यां प्रदाय मनसा वरम् ।
इतरेभ्यस्ततोदद्यादेष दानविधिः स्मृतः”।

इति। सूत्रद्वयं वैतत्, ‘पूर्णपात्रो दक्षिणा’—इति ‘तं ब्रह्मणे दद्यात्’—इति च। तत्र, ‘पूर्णपात्रो दक्षिणा’—इत्यनेन पूर्णपात्रं दक्षिणा भवति कर्म्मणामनुच्यमानायां दक्षिणायाम्,—इत्युच्यते। कथं ज्ञायते? अनुच्यमानायां दक्षिणायां पूर्णपात्रादिका दक्षिणा भवति इति कर्म्मप्रदीपवचनात् ।

‘तं ब्रह्मणे दद्यात्’—इत्यनेन ब्रह्मणे दक्षिणायादानमुपदिश्यते। तदनेन तच्छब्देन दक्षिणैव परामृश्यते न पूर्णपात्रम्। कस्मात्? सन्निहिततरत्वाद्दक्षिणायाः। व्यवेतत्वाच्च पूर्णपात्रस्य। अर्थवत्त्वाच्च। दक्षिणादानेन हि नः प्रयोजनं, न पूर्णपात्रदानेन। लिङ्गव्यत्ययस्त्वन्यत्रापि समानः। ‘ब्रह्मणे दक्षिणा देया’—इति कात्यायनवचनाच्चैतदेवं प्रतिपत्तव्यम्। स खल्वस्पष्टानां गोभिलीयानां पदार्थानां प्रदीपवत् स्पष्टमुपदेष्टेत्यवोचाम ॥ ६ ॥ ० ॥

किमिदं पूर्णपात्रं नाम? तदुच्यते,—

**कंसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते ॥ ७ ॥**

कंसं कांस्यभाजनम्, चमसं वानस्पत्यं पात्रं वा, अन्नस्य पूरयित्व

अन्नैर्वर्द्धयित्वा। अन्नस्य—इत्येतद्विशिनष्टि, कृतस्य वा अकृतस्य वा। अपि वा अथवा अन्नासम्भवे फलानामेव—फलैरेव भोक्ष्यरित्येव-कारकरणादुपदिशति, अन्यच्च फलमभोज्यं व्यवच्छिनत्ति। पूरयित्वा, एतं पूर्णपात्रम्—इत्याचक्षते आचार्य्याः। एतत् कंसादिकं पूर्णपात्र-माचक्षते। कथं कृत्वा? अन्नस्य पूरयित्वा स्थापितम्—इत्यर्थः। कियन्मितस्य पुनरन्नस्य पूरणम्? तदाह गृह्यसङ्ग्रहः।

"अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते"।

इति। असम्भवे पुनरेतस्य परिमाणस्य यावताऽन्नेन बहुभोक्तुः पुरुषस्य तृप्तिः सम्पद्यते, तावतोऽप्यन्नस्य पूरितं पात्रं पूर्णपात्रं भवति। तदाह कर्मप्रदीपः।

"यावता बहुभोक्तुश्च तृप्तिः पूर्णेन जायते।
नावरार्द्धं ततः कुर्य्यात् पूर्णपात्रमितिस्थितिः"।

इति॥ ७॥

## ब्रह्मैवैकऋत्विक्॥ ८॥

दर्शपौर्णमासप्रस्तावादिदमुच्यते। तेन सायं प्रातर्होमवैश्वदेवा-दीनामब्रह्मत्वेऽपि न क्षतिः। एक एव ब्रह्मा ऋत्विग्भवति। किमने-नोक्तम्? इदमनेनोक्तम्—एक एव ब्रह्मा सर्व्वकर्मसु ऋत्विक् कर्त्त-व्यो न पुनरेकस्मिन् कर्मण्येको ब्रह्मा अन्यस्मिंस्त्वन्यः अपरापरस्मिं-श्चापरापरः—इति। तदनेन,—यजमानेन ऋत्विगत्याज्यो भवतीत्यु-पदिशति। तथाच स्मरणम्।

"ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टमृत्विजं याज्यो विनेयौ तावुभावपि।
क्रमागतेष्वेष धर्मो वृतेष्वृत्विक्षु च स्वयम् ।
यादृच्छिके तु संयोज्ये तत्त्यागे नास्ति किल्बिषम् "।

इति । तथा मनुः ।

"ऋत्विजं यस्त्यजेद् याज्यो याज्यञ्चर्त्विक् त्यजेत्तु यः ।
शक्तं कर्मण्यदुष्टञ्च तयोर्दण्डः शतं शतम् "।

इति। अथवा। एकोब्रह्मैव ऋत्विगिति ब्रह्मणे दक्षिणा दाने हेतुवचनमेतत् । होताऽप्यस्त्वन्य ऋत्विगित्याशङ्कयामुत्तरं सूत्रं प्रवर्त्स्यति ॥ ८ ॥ ० ॥

पाकयज्ञेषु स्वयँ होता भवति ॥ ९ ॥

पाकयज्ञेषु अल्पयज्ञेषु प्रशस्तयज्ञेषु वा। कस्मात् ? उभयत्र पाकशब्ददर्शनात्। दृश्यते खल्वल्पे पाकशब्दः,—योऽस्मत् पाकतरः—इति। तं पाकेन मनसाऽपश्यम्—इति, योमा पाकेन मनसा—इति च प्रशंसायां पाकशब्दः प्रयुक्तः। स द्व्यर्थो गृह्यान्तरवृत्तिकारैर्निरूपितः। तत्प्रकारादयस्तु मन्यन्ते,—पाकयज्ञः—पाकाङ्कयज्ञो वृषोत्सर्गादिः—इति। वयन्तु, एकाग्नौ ये यज्ञाः तान् पाकयज्ञानवगच्छामः । कस्मात् ? अस्माकमेव ग्रन्थान्तरे समाम्नानात्। तथाच लाट्यायनसूत्रम्। "पाकयज्ञा इत्याचक्षते एकाग्नौ यज्ञान्"—इति ।

तेषु पाकयज्ञेषु स्वयं—स्वयमेव होता भवति। तदिदं स्वयमेव होतृत्वं प्रशस्तम्—इत्यवगम्यते। कुतः?

"स्वयं होमे फलं यत्तु तदन्येन न जायते"।

इति स्मरणात्। अन्यो होतैव कुतो न व्यवच्छिद्यते? स्वयमशक्तौ पाकयज्ञलोपापत्तेः। न चैतदुचितम्। जुहुयाद्वा हावयेद्वा—इति सामान्यतः सूत्रणात्। न प्रवसन्नुपवसेत्—इति च प्रवासदर्शनात्।

"निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजन्तथा।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित्"।

इति च कर्म्मप्रदीपवचनात्। तथाच स्मृत्यन्तरम्।

"मनसा नैत्यिकं कर्म प्रवसन्नप्यतन्द्रितः।
उपविश्य शुचिः सर्व्वं यथाकालमनुद्रवेत्"।

इति॥ ९॥ ०॥

## पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा॥ १०॥

पूर्णपात्रः—इति पुंस्त्वं व्याख्यातम्। पूर्णपात्रम् अवमं सर्व्वनिकृष्टं पाकयज्ञानां दक्षिणा। नातोऽप्यल्पतरी तेषां दक्षिणा अस्तीत्यर्थः॥ १०॥ ०॥

## अपरिमितं परार्द्ध्यम्॥ ११॥

न परिमितम् अपरिमितं बहु—इत्यभिप्रेतम्। तदिदम् अपरिमितं परार्द्ध्यं प्रशस्तं भवति दक्षिणा पाकयज्ञानाम्। परार्द्धम्—इति केचित् पठन्ति। परार्द्धं खल्वन्तिममङ्कस्थानमुच्यते गणितेषु।

तथाच अपरिमितं वरार्द्धपर्य्यन्तमपि पाकयज्ञानां दक्षिणा—इति तत्रार्थः ॥ ११ ॥ ० ॥

एतस्मिन्नर्थे दृष्टान्तमुपन्यस्यति,—

**अपि ह सुदाः पैजवन ऐन्द्राग्नेन स्थालीपाकेनेष्ट्वा शतꣳसहस्राणि ददौ ॥ १२ ॥**

अपिरन्यानपि समुच्चिनोति। ह—इत्यैतिह्यार्थको निपातः। शोभनं ददाति—इति सुदा नामतः, पिजवनस्य अपत्यं पुमान् पैजवनोऽपि ह किल ऐन्द्राग्नेन स्थालीपाकेन इष्ट्वा शतं सहस्राणि शतगुणितानि सहस्राणि लक्षम्—इत्येतत्। ददौ, दक्षिणाम्—इति प्रकरणाल्लभ्यते। कस्य वस्तुनः शतं सहस्राणि? गवाम्—इति ब्रूमः। कस्मात्? संख्यामात्रकीर्त्तनात्। संख्यामात्रकीर्त्तने च प्रायेण गा एव संख्येयतया व्यवहरन्ति याज्ञिकाः। शतदक्षिणेनाहं यक्ष्ये द्वादशशतदक्षिणेन—इति स्मर्त्तारः। "संख्यामात्रे च दक्षिणा गावः"—इति च द्राह्यायणसूत्रात् ॥ १२ ॥ ० ॥

एवं तावत् सायं प्रातर्होमवैश्वदेवबलिहरणदर्शपौर्णमासाख्यानि नित्यानि कर्म्माण्युक्तानि। तेषां च स्वे स्वे काले यावज्जीविकोऽभ्यासः न्यायविद्भिर्निरूपितः। एवञ्च कालस्य बहुलात् कदाचित्,—

**अथ यदि गृह्येऽग्नौ सायं प्रातर्होमयोर्व्वा दर्शपूर्ण-मासयोर्व्वा हव्यं वा होतारं वा नाधिगच्छेत्; कथं कुर्य्यादिति ॥ १३ ॥**

अथेति पूर्व्वप्रकृतार्थम्। अथैतयोर्गृह्येऽग्नौ यावज्जीवं कर्त्तव्ययोः

सायंप्रातर्होमयोर्व्वा, दर्शपूर्णमासयोर्व्वा । प्रदर्शनमेतत् वैश्वदेवस्यापि। दैवादन्यस्माद्वा कस्माच्चित् कारणात् हव्यं हवनीयं वस्तु वा, होतारं हवनकर्त्तारं वा स्वयमशक्तौ, यदि न अधिगच्छेत् न लभेत, तर्हि कथं कुर्य्यात्। किं स्वस्वकालात्ययमात्रेण लुप्यतएव तत्तत् कर्म्म, उतास्ति कश्चित् कालावधिरियति काले अतीते इति। एवमादि संशयच्छिदिषयैतत् पृच्छ्यते ॥ १३ ॥ ० ॥

एवं पृष्ट आह,—

**आ सायमाहुतेः प्रातराहुतिर्नात्येत्याऽऽप्रातराहुतेः सायमाहुतिराऽमावास्यायाः पौर्णमासं नात्येत्याऽऽपौर्णमास्या आमावास्यम् ॥ १४ ॥**

आ सायमाहुतेः सायमाहुतिपर्य्यन्तम्। सेयं सायमाहुतिर्म्मर्य्यादा अवधिः सीमेत्येतत्। प्रातराहुतिः नात्येति नातिक्रामति। सा खल्वियं स्वकाले अहुता प्रातराहुतिरिदानीं प्रायश्चित्तात्मकं महाव्याहृतिहोमं कृत्वा होतव्या। प्रायश्चित्तात्मकं महाव्याहृतिहोमं कृत्वेति कुत एतत्? श्रुतौ विधानादित्याह। तथाच ब्राह्मणम्। "स होवाच किं होष्यसीति, प्रायश्चित्तमिति, किं प्रायश्चित्तमिति, सर्व्वप्रायश्चित्तमिति, किं सर्व्वप्रायश्चित्तमिति, महाव्याहृतीरेवमब्रुवन्"—इत्यादि। तथाच गृह्यान्तरम्।

"स्वकाले सायमाहुत्या अप्राप्तौ होतृहव्ययोः।
प्राक् प्रातराहुतेः कालः प्रायश्चित्ते कृते सति।
प्राक् सायमाहुतेः प्रातर्होमकालाऽनतिक्रमः।

प्राक् पौर्णमासादर्शस्य प्रागदर्शादितरस्य च"।

इति। एतेनैवसूत्रशेषोव्याख्यातः। तदिदं प्रदर्शनार्थं परि-कीर्त्तनं सायमाहुत्यादीनां न नियमार्थम्। कुतः? याज्ञिक-समयात्। तथाचोक्तं त्रिकाण्डमण्डनेन।

"मुख्यकाले यदाऽवश्यं कर्म्म कर्त्तुं न शक्यते।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशो भवेत्।
आ सायमाहुतेः कालात् कालः स्यात् प्रातराहुतेः।
प्रातराहुतिकालात् प्राक् कालः स्यात् सायमाहुतेः।
पूर्णमासस्य कालोऽस्ति पुरा दर्शस्य कालतः।
स्यात् साकमेधकालोऽपि आ सुनासीरकालतः।
सुनासीरीयकालोऽप्याऽऽवैश्वदेविककालतः।
श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः।
प्राग्यष्टुं युज्यतेऽवश्यं नैव त्वाग्रयणात्ययः।
दक्षिणायनकाले या पश्विज्या योत्तरायणे।
अन्योन्यकालतः पूर्व्वं यष्टुं युक्ते उभे अपि।
एवमागामियागीयमुख्यकालादधस्तनः।
स्वकालादुत्तरो गौणः कालः पूर्व्वस्य कर्म्मणः।
यद्वाऽऽगामिक्रियामुख्यकालस्याप्यन्तरालवत्।
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणि"।

इति। सर्व्वमेव प्राक्तनकर्म्म प्रायश्चित्तहोमानन्तरमेव गौणकाले करणीयम्। सायमाहुत्यादौ तथा दर्शनात्।

"गौणेषु तेषु कालेषु कर्म्म चोदितमारभेत्।

प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्"।

इति स्मरणाच्च। वैश्वदेवस्य पुनरतिक्रमे अभोजनमपि कृत्वा कालान्तरे तदाचरणम्। तथाच गृह्यान्तरम्।

"वैश्वदेवे त्वतिक्रान्ते अहोरात्रमभोजनम्।
प्रायश्चित्तमथो कृत्वा पुनः सन्तनुयाद्व्रतम्"।

इति। प्रथमवैश्वदेवातिक्रमे दिवा अभोजनं, द्वितीयवैश्वदेवातिक्रमे च रात्रावभोजनम्—इति परिशिष्टप्रकाशः। वैश्वदेवद्वयातिक्रमे तु विशेषमाह कर्म्मप्रदीपः।

"परेणाग्नौ कृते स्वार्थं परस्याग्नौ कृते स्वयम्।
पितृयज्ञात्यये चैव वैश्वदेवद्वयस्य च।
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा।
भोजने पतितान्नस्य चरुर्व्वैश्वानरो भवेत्"।

इति। प्राक् सूर्य्यास्तमयात् प्रथमो वैश्वदेवो नात्येति, प्राक् च रात्रेः सार्द्धात् प्रहरात् द्वितीयः। कुतः? यतस्तावानेव भोजनकालः। तथाच कर्मप्रदीपः।

"मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्।
अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः"।

इति ॥ १४ ॥ ० ॥

## एतेनैवावकाशेन हव्यं वा होतारं वा लिप्सेत ॥ १५ ॥

एतेन—इति गौणकालपरामर्शः। लिप्सेत लब्धुमिच्छेत्। लिप्सेत्—इति पाठे व्यत्ययात् परस्मैपदम्। प्राप्तस्याप्यादरार्थम-

भिधानम्। कथं नाम? तथा लिप्सेत यथा गौणकालो नात्येति, तस्याप्यतिक्रमे कर्मैव लुप्यते,—इत्यभिप्रायः। ऋज्वन्यत्। यदा पुनर्लभ्यते, तदा होतव्यम्। तदाह कर्मप्रदीपः।

"पौर्णमासात्यये हव्यं होता वा यद्दर्भवेत्।
तद्दद्जुहुयादेवमामावस्यात्ययेऽपिच"।

इति ॥ १५ ॥ ० ॥

**अपि वा यज्ञियानामेवौषधिवनस्पतीनां फलानि वा पलाशानि वा श्रपयित्वा जुहुयात् ॥ १६ ॥**

अपि वा—इति पचान्तरमुपदिश्यते। एतेनाप्यत्रकाशेन हविष्य-नुपलभ्यमाने यज्ञियानां यज्ञार्हाणामनिषिद्धानाम्—इत्येतत्। ओष-धीनाम्—

"व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः"।

इति कर्मप्रदीपोक्तानाम्। वनस्पतीनां वृक्षाणाञ्च,—

"अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः"।

इत्युक्तलक्षणानां वा फलानि शस्यानि वा; पलाशानि छद-नानि पत्राणि वा, यथोपपन्नानि; श्रपयित्वा स्थालीपाकविधिना, जुहुयात् ॥ १६ ॥ ० ॥

**अप्यप एवान्ततो जुहुयादिति ह स्माह पाकयज्ञ-श्चैड़ो हुतं ह्येव ॥ १७ ॥**

अन्ततः सर्वासम्पत्तौ अप उदकम् अपि जुहुयादेव, न तु

अद्भिः कथं होमः—इत्याशङ्कीत। सर्वालाभे उदकमप्यन्ततो मध्यत-एवाग्नेर्जुहुयात् न लभ्युपशमाशङ्कां कुर्य्यादिति वा व्याख्येयम्। इति ह किल आहस्म उवाच, नामतः पाकयज्ञः इड़ाया अपत्यम् ऐड़ः कश्चिदाचार्य्यः; कृतमेव भवत्येवमपि कृते। हिशब्दो यस्मादर्थे। यस्मादेवमपि कृते कृतमेव भवति न अकृतम्—इति पाकयज्ञ आहस्म, तस्मादप एवान्ततो जुहुयादित्यर्थः॥ १७॥ ०॥

## अहुतस्य प्रायश्चित्तं भवतीति॥ १८॥

कृत—इति कर्त्तरि निष्ठा। न कृतं येन—इति वा विग्रहः। अकृतस्य उदकस्याप्यलाभात् होममकुर्वतः प्रायश्चित्तं भवति। किं पुनस्तत् प्रायश्चित्तम्? पुनराधानम्—इति ब्रूमः। कुतः?

"होमद्वयात्यये दर्शपूर्णमासात्यये तथा।
पुनरेवाग्निमादध्यादिति भार्गवशासनम्"।

इति स्मरणात्। इतिरन्यान्यपि पुनराधाननिमित्तानि समुच्चिनोति। तानि च,—

"असमक्षन्तु दम्पत्योर्होतव्यं नर्लिगादिना।
द्वयोरप्यसमक्षन्तु भवेद्धुतमनर्थकम्"।

इत्येवमादीनि कर्मप्रदीपादिष्वनुसन्धेयानि। पुनराधान-प्रकारश्च,—

"पूर्व्वैव योनिः पूर्व्वाऽऽवृत्पुनराधानकर्म्मणि"।

इत्यादिना कर्म्मप्रदीप एव अभिहितः॥ १८॥ ०॥

नाव्रतो ब्राह्मणः स्यादिति ॥ १९ ॥

व्रतरहितो ब्राह्मणो न स्यादल्पमपि कालम्। "मुहूर्त्तमपि नाव्रतो ब्राह्मणः स्यात्"—इति पाठे व्यक्त एवार्थः। इतिर्हेतौ। यस्मात् नाव्रतो ब्राह्मणः स्यात्, तस्मात् पुनराधाननिमित्ते जाते, अविलम्बमेवादध्यादित्यभिप्रायः ॥ १९ ॥ ० ॥

अथाप्युदाहरन्ति ॥ २० ॥

ऋजुरक्षरार्थः। अकृतस्य प्रायश्चित्तं पुनराधानमुक्तम्, अथेदानीमन्यदपि पक्षान्तरं तत्र दर्शयितुं ब्राह्मणवाक्योदाहरणाभासरूपं सूत्रम् ॥ २० ॥ ० ॥

यावन्न हूयेताऽभोजनेनैव तावत् सन्तनुयात् ॥ २१ ॥

हविषोऽलाभे यावन्न हूयेत हूयते, अभोजनेनैव तावत् तावन्तं कालं सन्तनुयात् सन्ततमविच्छिन्नमलुप्तं कुर्य्यादग्निव्रतम्—इत्यर्थः। यावता कालेन हविर्लभ्यते, तावति काले अभोजनेऽपि व्रतमलुप्तं भवतीत्यभिप्रायः ॥ २१ ॥ ० ॥

किमभोजनेनैव व्रतं सम्पद्यते? न। किन्तर्हि?—

अथ यदाऽधिगच्छेत् प्रति जुहुयात् ॥ २२ ॥

यदा पुनरधिगच्छेल्लभेत हविः, तदा अथ,—सायमाद्युपक्रमत्वात् कर्मणां सायमादिकालं प्रतीक्ष्य, प्रति जुहुयात्। यावन्न हूयते तावन्तं कालमभोजनेन क्षपयित्वा यदा हविरुपलभ्यते तदा

तदानीमेव न जुहुयात्, किन्तु सायमादिकालं प्रतीक्ष्य प्रति जुहुयादित्यर्थः। प्रतिशब्दो होमस्य प्रकारविशेषद्योतनार्थः। कतमः पुनरसौ प्रकारः? उच्यते। अतिक्रान्ताः सर्व्वा अग्निदैवत्या आहुतीर्व्विगणय्य तावन्ति हवींषि पात्रे कृत्वा,—अग्नये स्वाहा—इति सकृदेव जुहुयात्। एवं प्राजापत्याः। एवम् अपरापराः। तदाह कर्मप्रदीपः।

"आहूयमानेऽनश्नंश्चेत् नयेत् कालं समाहितः।
सम्पन्ने तु यथा तत्र हूयते तदिहोच्यते।
अहुताः परिसङ्ख्याय पात्रे कृत्वाऽऽहुतीः, सकृत्।
मन्त्रेण विधिवद्धुत्वा एवमेवापरा अपि"।

इति ॥ २२ ॥ ० ॥

## एवमप्यस्य व्रतꣳसन्ततं भवतीति ॥ २३ ॥

एवम् अपि कृते अस्य व्रतिनो व्रतं नियमः सन्ततम् अविलुप्तं भवति। तस्मात् पुनराधानं न कर्त्तव्यम्—इत्यभिप्रायः। इतिः ब्राह्मणवाक्यावसानज्ञापनार्थः, प्रकरणपरिसमाप्त्यर्थो वा ॥ २३ ॥ ० ॥

## एषोऽत ऊर्द्ध्वꣳहविराहुतिषु न्यायः ॥ २४ ॥

अत ऊर्द्धम् अस्मात् परतो वक्ष्यमाण एष न्यायो हविराहुतिषु—हूयते—इति हविः; अविशेषात् समिदाज्यपश्वपूपशाकादिकं सर्वमुच्यते, तस्य हविष आहुतिषु बोद्धव्यः—इति परिभाष्यते।

पराचीनस्यापि बुद्ध्या सन्निकृष्य एतद्वा परामर्शः। न्यायग्रहणं क्वचिदाम्नातस्यापि प्रतिषेधार्थम्। यथा समाम्नातोऽपि मन्त्रान्ते स्वाहाकारः स्वाहान्ते मन्त्रे नाद्रियते, अन्याय्यत्वात्। तच्चोत्तरत्र वक्ष्यामः। एवमन्यदपि ऊह्यम्।

एवं वा—

एषोऽनन्तरोक्तो न्यायः प्रकारः—इत्येतत्। अत ऊर्द्धं वक्ष्यमाणासु हविराहुतिषु द्रष्टव्यः—इत्युक्तः प्रकारः सर्वत्रातिदिश्यते। न्यायग्रहणेन किमुक्तं भवति? एतदनेनोक्तं भवति;—अत ऊर्द्धं ये चिप्रहोमा ब्रह्मचारिसमिदाधानादयो वक्ष्यन्ते, तेषु चिप्रहोमोक्त एव प्रकारो भवति। ये पुनस्तन्त्रहोमाः वैवाहिकहोमादयः, तेषु ब्रह्मोपवेशनादि तन्त्रं द्रष्टव्यम्। तथा क्वचित् प्राप्तोऽप्यर्थोऽर्थाभावान्निवर्त्तते। किमुदाहरणम्? इदमुदाहरणम्। आज्यतन्त्रेषु मुषलोलूखलसूर्पादयो निवर्त्तन्ते, पाण्याहुतिषु मेचणसुगादयः—इति। सोऽयं न्यायशब्दस्यार्थः ॥ २४ ॥ ० ॥

## मन्त्रान्ते स्वाहाकारः ॥ २५ ॥

होममन्त्राणाम् अन्ते अवसाने स्वाहाकारः कर्त्तव्यः—इति सूत्रशेषः। अधिकाराद्धोममन्त्राणामेवान्ते स्वाहाकारः कर्त्तव्यो न जपादिष्वपि। तत्रापि ये मन्त्राः स्वाहाकाररहिता एव पठ्यन्ते, यथा अग्ने प्रायश्चित्ते इत्यादयः, तदन्त एव स्वाहाकारः स्यात्। न त्वाम्नातस्वाहाकारान्तेष्वपि अग्निरेतु प्रथम इत्येवमादिषु। किं

कारणम् ? हविस्त्यागार्थः खल्वयं स्वाहाकारः—इति आम्नात स्वाहाकारान्तेषु मन्त्रेषु नैष विधिरुपतिष्ठते। तत्र खल्वाम्नाते-नैव स्वाहाकारेण हविस्त्यागः कृतः—इत्यपरस्याम्नानमनर्थकं भवति। तथाच तान्त्रिकाः पठन्ति।

"नमोऽन्ते न नमो दद्यात् स्वाहान्ते द्विठमेवच।
पूजायामाहुतौ चापि सर्वत्रायं विधिः स्मृतः"।

इति। यत्र च मन्त्रादितोऽपि समाम्नातः स्वाहाकारो हविस्त्यागार्थो भवति, तत्राप्यग्नौकरणहोमे मन्त्रान्ते स्वाहाकारान्तरं न कर्त्तव्यमेव। न्यायस्याविशेषात्। तत्र हि स्वाहाकारेण हविस्त्यागं कृत्वा परतो मन्त्रः समापनीयः। तदाह कर्मप्रदीपः।

"स्वाहां कुर्य्यान्न चात्रान्ते न चैव जुहुयाद्धविः।
स्वाहाकारेण हुत्वाऽग्नौ पश्चान्मन्त्रं समापयेत्"।

इति। होममन्त्राणाञ्चादौ न प्रत्येकम् ॐकारः करणीयः। तदप्याह स एव।

"नोङ्कुर्य्याद्धोममन्त्राणां पृथगादिषु कुत्रचित्।
अन्येषाञ्च विकृष्टानां कालेनाऽऽचमनादिना"।

इति ॥ २५ ॥ ० ॥

**आज्याहुतिष्वाज्यमेव सꣳस्कृत्योपघातं जुहुयात् नाज्यभागौ न स्विष्टकृत् ॥ २६ ॥**

आज्यस्य यथोक्तस्याऽऽहुतिषु—यत्राज्यमेव हूयते—इत्यर्थः। तेषु

चतुर्थीकर्म्मादिषु। आज्यं संस्कृत्यैव उपघातं यथा भवति तथा जुहुयात्, द्रवद्रव्यकत्वात् स्रुवेण—इत्यर्थः। एवकारेण यद्व्यवच्छिद्यते, तदप्युच्यते सुखावबोधार्थम्। नाज्यभागावत्र भवतः न च स्विष्टकृदपि भवति। तदेते अतिदेशागता इह प्रतिषिध्यन्ते॥ २६॥ ०॥

**आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः॥ २७॥**

आज्याहुतिषु आज्यमात्राहुतिषु, यत्राज्यमेव हूयते न चर्व्वादिकं तत्रेत्यर्थः। आहुतेरनादेशे च। मध्यात् पूर्व्वार्द्धादितिवच्चशब्दः समुच्चयार्थो लुप्तवत् द्रष्टव्यः। यत्र होम एव नादिश्यते उपदिश्यते चाग्निरवगम्यते वा किञ्चिदन्यद्धोमलिङ्गं, तत्र गर्भाधानपुंसवनशुङ्गाकर्म्मसीमन्तकरणचूड़ाकरणादिषु प्रधानकर्म्मणो गर्भाधानाऽंसाभिमर्शनादेः पुरस्ताच्च उपरिष्टाच्च,—आद्यन्तयोरित्यर्थः। महाव्याहृतयः तिस्रः व्याख्याताः, ताभिर्होमः कर्त्तव्यः—इति वाक्यशेषः। एवं खल्वग्नेरुपदेशस्तत्र तत्रार्थवान् भवति। इतरथाऽनर्थको वा स्यात्, अदृष्टार्थो वा कल्प्येत। तथा च "पश्चादग्नेरुदगग्रेषु दर्भेषु"—इत्यादिना तत्र तत्राग्निमुपदेक्ष्यति। मनुरपि सहोमकत्वमेषामाह।

"गार्भैर्होमैर्जातकर्मचौड़मौञ्जीनिबन्धनैः।
बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते"।

इति ब्रुवाणः। चन्द्रदर्शनादावपि तर्हि पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होतव्यम्? न। तत्राग्नेरप्युपदेशाभावात्। अतएव,—

"अहोमकेष्वपि भवेत् यथोक्तं चन्द्रदर्शने"।

इति कर्मप्रदीपेऽपि चन्द्रदर्शनस्याहोमकत्वमुक्तम्। गर्भाधानेऽपि होममवसरे उपपादयिष्यामः।

अन्ये तु वर्णयन्ति,—'आज्याहुतिष्वनादेशे आज्याहुतयोऽपि यत्र नादिश्यन्ते—होम एव यत्र नादिश्यते—इत्यर्थः। न पुनराज्याहुतिषु अनादेशे च—इति व्याख्यानं युक्तं, चकाराध्याहारदोषात्'—इति। अत्र ब्रूमः। आज्याहुतयो यत्र नादिश्यन्ते—इति वर्णनायां सर्व्वाहुतिष्वतिप्रसङ्गः। आज्याहुतयोऽपि यत्र नादिश्यन्ते—इत्यर्थकल्पने च व्यक्तमपेरध्याहारः। आज्यपदञ्चैवमनतिप्रयोजनं स्यात्। आहुतिष्वनादेशे—इति खल्वभिप्रेयते। तस्मादस्मदुक्तमेव व्याख्यानमादरणीयम्। द्योतको हि चशब्दस्तात्पर्य्यस्येष्यते। तच्चेत् तात्पर्य्यमन्यस्मादपि कारणादवगम्यते, अकिञ्चित्करं तदकीर्त्तनं भवति। आज्याहुतिषु—इति सप्तमीनिर्देशश्चैवं तात्पर्य्यमुपोद्बलयति। आज्याहुतिष्वनादेशे—इति चास्मासकरणं प्रत्येकमन्वयं द्योतयति ॥ २७ ॥ ० ॥

**यथा पाणिग्रहणे; तथा चूडाकर्म्मण्युपनयने गोदाने च ॥ २८ ॥**

यथा पाणिग्रहणे महाव्याहृतिभिः व्यस्तसमस्ताभिस्तस्य आहु-

तयो ह्रयन्ते । तथाच पाणिग्रहणे वच्यत्याचार्य्यः,—महाव्याहृतिभिश्च पृथक्, समस्ताभिश्चतुर्थीम्—इति । तथा चूड़ाकर्म्मणि । तथा शब्दः प्रत्येकमभिसम्बध्यते । तथोपनयने, तथा गोदाने च,—इत्यतिदिश्यते । सोऽयमनागतातिदेशः । चूड़ाकर्म्मादिव्यतिरिक्तेषु तु तिस्र एवाहुतयो भवन्ति ॥ २८ ॥ ० ॥

अपवृत्ते कर्म्मणि वामदेव्यगानꣳ शान्त्यर्थꣳ शान्त्यर्थम् ॥ २९ ॥

अपवृत्ते समाप्ते कर्म्मणि वामदेव्यगानं, कर्त्तव्यम्—इति परिभाष्यते । तस्मात् सर्व्वेषामेव कर्म्मणामपवर्गे वामदेव्यं साम गातव्यम् । कर्म्मणि—इति सामान्येनोपदेशाच्च । बहूनाञ्च कर्म्मणामेकदा करणे अन्ततः सकृदेव वामदेव्यं गातव्यं न प्रत्येकमन्ते । तदाह कर्म्मप्रदीपः ।

"अहोमकेष्वपि भवेत् यथोक्तं चन्द्रदर्शने ।
वामदेव्यं गणेष्वन्ते बच्यन्ते वैश्वदेविके" ।

इति । गानस्य अशक्तावपि ऋचो वारत्रयं पठनीयाः । तदप्याह स एव ।

"अन्ते च वामदेव्यस्य गानं कुर्य्यादृचस्त्रिधा" ।

इति । शान्त्यर्थम्—इति विहितं वामदेव्यगानमनेन स्तूयते—इत्यर्थवादोऽयम् । उभयस्मिन् विधीयमाने हि वाक्यं भिद्येत । वामदेव्यगानं कर्त्तव्यम्, तच्च शान्त्यर्थं भवति—इति । तस्मात्,—

"उदुम्बरो यूपो भवति ऊर्ग् वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुध्यै"—इतिवदिहापि स्तुतिरेव प्रयोजनं न फलविधिः। अन्ये त्वाहुः,—शान्त्यर्थम्—इति वचनाच्चातीव अस्य नित्यत्वम्—इति। शान्त्यर्थं शान्त्यर्थम्—इत्यभ्यासः प्रपाठकपरिसमाप्तिं द्योतयति ॥ २८ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजश्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये प्रथमप्रपाठकस्य नवमी खण्डिका समाप्ता ॥ ० ॥

समाप्तश्चायं प्रथमः प्रपाठकः ॥ ॐ

---

# गोभिलीयगृह्यसूत्रे

द्वितीयप्रपाठके प्रथमा खण्डिका ।



एवन्तावत् प्रथमे प्रपाठके अग्निसमाधानम्, समाहिताग्नेश्चावश्यकर्त्तव्यं सायंप्रातर्होमादिकम्, देवसवितरित्यादेश्च मन्त्रस्य पर्य्युक्षणे विनियोगो निरूपितम् । समाधानञ्चाग्नेर्जायायाः पाणिं जिघृक्षोरभिहितम् । अथेदानीं कथं जायायाः पाणिर्गृह्यते, देवसवितरित्यादेः परेषाञ्च मन्त्राणां विनियोगः,—इत्येवमर्थजातं निरूपयितुं द्वितीयः प्रपाठक आरभ्यते । प्रसङ्गागतञ्चान्यत् । तत्र तावत् "देव सवितः"—इति मन्त्रादूर्द्ध्वं पाणिग्रहणलिङ्गामन्त्राः पठ्यन्ते । तद्विनियोगविवक्षया पाणिग्रहणमेव प्रथमं निरूप्यते,—

**पुण्ये नक्षत्रे दारान् कुर्व्वीत ॥ १ ॥**

पुण्ये शोभने, नक्षत्रे ऋक्षे । "उदगयने पूर्व्वपक्षे पुण्येऽहनि"—इति सिद्धत्वादेतदवाच्यम्—इति चेत् । न । दारकर्म्मणि तिथिवारयोगकरणापेक्षया नक्षत्रस्यादरातिशयार्थत्वात् । दाराः गृहाः पञ्चालाः—इत्येवमाद्यो नित्यबहुवचनान्ताः शब्दाः पुंलिङ्गाः । दारान् सहधर्म्मचारिणीम्, पत्नीम्—इत्यनर्थान्तरम् । वक्ष्यमाणेन पाणिग्रहणविधिना कुर्व्वीत ॥ १ ॥ ० ॥

कीदृशान् दारान् कुर्व्वीत ? तदाह

**लक्षणप्रशस्तान् कुशलेन ॥ २ ॥**

प्रशस्तम् अवैधव्यादिसूचकं लक्षणं चिह्नं येषां, त इमे प्रशस्त-

लक्षणाः सन्तो व्यत्ययेन लक्षणप्रशस्ता इत्युच्यन्ते। तान्। लक्षणेन शोभनलक्षणेन प्रशस्तान् श्रेष्ठान्—इति वाऽर्थः। दारान् कुर्व्वीत—इति दारसम्बन्धविवक्षया इत्थं निर्द्देशः। कथमवगम्यन्ते लक्षणानि? तदुच्यते। कुशलेन स्त्रीलक्षणविदा। स्त्रीणां लक्षणानि शुभाशुभसूचकानि यो वेत्ति सोऽयं स्त्रीलक्षणविद् उच्यते। तेन परीक्षितान्—इत्यर्थः। तथाच स्मरणम्।

"सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि।
अतः सुखसमृद्ध्यर्थमादौ लक्षणमीक्षयेत्"।

इति। इयमपरा सूत्रयोजना। लक्षणविदा कर्त्रा लक्षणेन शोभनलक्षणेन प्रशस्तान् अन्तर्भूतणिजर्थतया प्रशंसितान् दारान् कुर्व्वीत। लक्षणशब्दः शोभनलक्षणार्थोऽन्यत्रापि दृश्यते* ॥ २ ॥

---

* केचिदेतत्सूत्रानन्तरम्—"अनार्षशुल्कारहिताम्"—इति सूत्रमधिकं पठन्ति। "आर्षशुल्कं गोमिथुनादि, तदितरशुल्कानीतां त्यजेत्"—इति व्याचक्षते च। तदिदं सूत्रमनार्षमिति प्रतिभाति। तथाहि। पूर्व्वं "दारान् कुर्व्वीत"—इति सूत्रयित्वा, तद्विशेषणत्वविवक्षयैव च—"लक्षणप्रशस्तान्"—इति, किमिति "अनार्षशुल्कारहितान्"—इति नासूत्रयत्। "तदलाभे पिण्डान्"—इत्युत्तरं सूत्रमप्येवं सत्युपपद्यते। तत्र हि तच्छब्देन स्त्रीलक्षणविदः परामर्शः। एतच्चानयोरेव सूत्रयोरानन्तर्य्ये सुश्लिष्टं स्यात्। न पुनरन्तरा सूत्रान्तरेण व्यवधाने। अपिच। अनार्षशुल्कारहिताम्—इत्यनेनार्षेऽपि गोमिथुनस्य शुल्करूपता प्रतीयते। सोऽयमर्थो न्यायविरुद्धो मनुविरुद्धश्च। तथाच मनुः।

"आर्षे गोमिथुनं शुल्कं केचिदाहुर्म्मृषैव तत्।
अल्पोऽप्येवं महान् वापि विक्रयस्तावदेव सः"।

इति। सूत्रपुस्तकेषु सर्व्वेष्वस्मदवलोकितेषु सोसाइटिभाष्यपुस्तकेषु च, अनार्षशुल्कारहिताम्—इति सूत्रं न दृश्यते।

## तदलाभे पिण्डान् ॥ ३ ॥

तदिति प्रकृतः स्त्रीलक्षणवित् परामृश्यते । तस्य स्त्रीलक्षणविदोऽलाभे पिण्डान् कुर्व्वीत ॥ ३ ॥ ० ॥

कुतो मृदमादाय पिण्डाः कर्त्तव्याः ? तदाह—

## वेद्याः सीतायाः ह्रदाद्गोष्ठाच्चतुष्पथादादेवनादादहनादीरिणात् ॥ ४ ॥

वेदिरग्निष्टोमादौ विहिता । सीता लाङ्गलपद्धतिरित्यर्थान्तरम् । कृष्टं चेत्रम्—इत्येके । ह्रदोऽगाधजलाशयो ग्रीष्मेऽपि यः शोषं नैति । गावो यत्र तिष्ठन्ति तद्गोष्ठम् । चतुष्पथः प्रसिद्धः । आदीव्यते यत्र तदादेवनं द्यूतस्थानम् । आदह्यते यत्र तदादहनं श्मशानम् । यत्रोप्तं बीजं न प्ररोहति तदीरिणम् ऊषरम्—इत्येकोऽर्थः । एतेभ्यो वेद्यादिस्थानेभ्यो मृदमादाय पृथगेव पिण्डान् कुर्व्वीत । पृथगिति कुतो वर्ण्यते ? असमासकरणादित्याह । सर्व्वेभ्यः सम्भार्य्यम्—इति चोत्तरत्राम्नानात् । एवं खल्वष्टौ पिण्डा भवन्ति ॥ ४ ॥ ० ॥

## सर्व्वेभ्यः सम्भार्य्यं नवमम् ॥ ५ ॥

सर्व्वेभ्यो वेद्यादिस्थानेभ्यः स्तोकस्तोकां मृदं सम्भृत्याहृत्य क्रियते—इति सम्भार्य्यं नवमं पिण्डं कुर्व्वीत ॥ ५ ॥ ० ॥

## समान् कृतलक्षणान् ॥ ६ ॥

समान् समानान् प्रमाणतः, कृतं लक्षणं येषां तान् कृतलक्षणांश्च

पिण्डान् कुर्व्वीत। लक्षणं चिह्नम्—इत्यनर्थान्तरम्। यतमः पिण्डो- यतमस्या मृदस्तच्चिह्नं कर्त्तव्यं वक्ष्यमाणार्थम् ॥ ६ ॥ ० ॥

ताम् खल्विमान् पिण्डान्—

**पाणावाधाय कुमार्य्या उपनामयेहतमेव प्रथमम्तं नात्येति कश्चनर्त्तं इयं पृथिवी श्रिता सर्व्वमिदमसौ भूयादिति, तस्यानाम गृहीत्वैषामेकं गृहाणेति ब्रूयात् ॥ ७ ॥**

स्वकीये पाणौ हस्ते आधाय कृत्वा कुमार्य्याः कन्यायाः उप समीपे नामयेत् स्थापयेत्, ऋतमेव प्रथमम्—इत्यनेन मन्त्रेणेतिकारान्तेनेत्यर्थः। किं कृत्वा ? असावित्यस्मिन् मन्त्रस्थाने तस्याः कुमार्य्या-नाम गृहीत्वा उच्चार्य्य। तेन 'सर्व्वमिदं गौरीदा भूयात्'—इत्येवमादिकः प्रयोगः। एवं स्थापयित्वा, पुनः, तस्या नाम गृहीत्वा योग्यत्वात् सम्बोधनविभक्त्या उच्चार्य्य—एषामेकं गृहाण—इति ब्रूयात्। 'गौरीदे! एषामेकं गृहाण'—इत्यादिः प्रयोगः। तदिदं तस्या नाम गृहीत्वेति मध्यपठितं मध्यमणिन्यायेनोभाभ्यां सम्बध्यते। अतएव गृहाणेति सम्बोध्यमानार्थापेक्षी मध्यमपुरुषोऽप्यात्रस्थेनोपपद्यते ॥ ७ ॥ ० ॥

**पूर्व्वेषां चतुर्णां गृह्णन्तीमुपयच्छेत् ॥ ८ ॥**

पूर्व्वेषां चतुर्णां वेदि-सीता-ह्रद-गोष्ठमृत्तिकाचिह्नितानां पिण्डानाम्

एकतमं पिण्डं गृह्णन्तीं (छान्दसोऽयं प्रयोगः) गृह्णतीम् आददानां कुमारीमुपयच्छेत् विवाहयेदित्यर्थः ॥ ८ ॥ ० ॥

## सम्भार्य्यमपि त्वेके ॥ ९ ॥

सम्भार्य्यमपि पिण्डमाददानामुपयच्छेदित्येके आचार्य्या मन्यन्ते। अस्मादेवावगम्यते,—सम्भार्य्यमाददानां नोपयच्छेदित्यन्ये मन्यन्ते—इति। तस्मात् सम्भार्य्यमाददानामिच्छयोपयच्छेद्वा न वोपयच्छेत् —इति सिद्धम्। किं कारणम्? शुभाशुभयोर्म्मिश्रत्वम्। कुतः पुनरेतत्? प्रत्येकशः फलार्थवाददर्शनात् सम्भार्य्यस्य च सर्व्वघटितत्वात्। तथाच गृह्यासंग्रहः।

"वेदिपिण्डात् क्रियावती सीतायाः फलते कृषिः।
अक्षोभ्या च ह्रदे ज्ञेया गोष्ठे भवति गोमती।
चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया।
श्मशाने म्रियते भर्त्ता बन्ध्या भवति चोषरे।
नवमे सर्व्व एवैते कन्यायाः परिगृह्यन्ते"।

इति। शाखान्तरेऽप्येवमेव प्रायः फलवादाः श्रूयन्ते। किन्तु तत्र क्रियावत्त्वादिकमपत्यगतमिति विशेषः। तथा चोक्तम्।

"गृह्णाना वेदिपिण्डञ्च प्रसूते याज्ञिकान् सुतान्।
सीतापिण्डन्तु गृह्णाना सुतान् सूते कृषीवलान्।
सर्व्वकामसमृद्धांश्च हृतीयस्य परिग्रहात्।
गोष्ठपिण्डग्रहाच्चापि गोमिनः सुखिनस्तथा।
इतस्ततश्च गन्तारः पञ्चमेनाश्रिताः सुताः।

षष्ठेन तु गृहीतेन भवन्ति द्यूतसेविनः।
श्मशानपिण्डग्रहणाद्विधवा जायते ध्रुवम्।
वन्ध्या वा विधवा वा स्यादष्टमग्रहणादपि।
मिश्रमेतद्भवेत् सर्व्वं यतः पूर्व्वोदितं फलम्।
नवमस्य ग्रहस्तस्मात् शुभो वा यदि वाऽशुभः"।

इति ॥ ९ ॥ ० ॥

अथेदानीमासन्नविवाहायाः कन्यायाः स्नपनमभिधीयते,—

**क्लीतकैर्यवैर्म्माषैर्व्वाऽऽप्लुताᳫँ सुहृत् सुरोत्तमेन सशरीरां त्रिर्मूर्द्धन्यभिषिञ्चेत्—काम वेद ते नाम मदो नामासीति, समानयामुमिति पतिनाम गृह्णीयात्, स्वाहाकारान्ताभिरुपस्थमुत्तराभ्यां प्लावयेत् ॥ १० ॥**

क्लीतकैः क्लिन्नकैः चूर्णीकृत्योदकेन द्रवीकृतैरित्येतत्। कैः? यवैर्माषैर्व्वा। यवमाषौ प्रसिद्धौ। वाशब्दो विकल्पार्थः। "मसूरयवमाषाणां सूक्ष्मचूर्णान्येकीकृत्य"—इति भवदेवभट्टवचनमप्रमाणम्। तदेभिर्यवैर्माषैर्व्वा आप्लुतां कृतसर्व्वाङ्गोद्वर्त्तनां, सुहृत् मित्रं स्निग्धहृदयः—इत्यनर्थान्तरम्। सह शरीरेण वर्त्तमानां कन्यां मूर्द्धनि शिरसि त्रिर्व्वारत्रयम् अभिषिञ्चेत्। मूर्द्धनि तथाऽभिषेक्तव्यं यथा सर्व्वमेव शरीरमभिषिक्तं भवतीत्यर्थः। केन अभिषिञ्चेत्? सुरोत्तमेन। धरुणा सुराऽररिन्द्रानीत्युदकनामसु नैघण्टुक काण्डे पाठादुदकनामैतत्—यत् सुरेति। तदयमर्थः। उदकेन

उत्तमेन ,शोभनगन्धवर्णादियुक्तेन अभिषिञ्चेत् । सुरैव कस्मान्नोच्यते ? उच्यते । सुरा हि नामात्यन्तमपवित्रं यदस्याः प्राणस्पर्शयोरपि प्रायश्चित्तमुपदिशन्ति । तथाच स्मर्य्यते ।

"सुराया गन्धमाघ्राय स्नात्वाऽऽज्यं प्राश्य शुध्यति ।
स्पर्शे प्रतिग्रहे चैव अहं पीत्वा तथोदकम्" ।

इति । "सुरास्नानसमं तैलम्"—इति च सुरास्नानस्यात्यन्तनिन्द्यतां दर्शयति । वचनबलाददोषः ?—इति चेत् । न । अन्यथोपपत्तेः । अन्यथाऽपि वचनमुपपद्यते—इति नास्ति वचनस्य बलम् । न खल्वविरोधेन सम्भवति वचनार्थे विरुद्धमर्थं प्रकल्प्य वचनबलाददोषः—इतीयं कल्पना साधीयसी भवति । अन्यथोपपन्नञ्च वचनं न सामान्यस्यापि शास्त्रस्य बाधकं भवितुमर्हति—इति चमसिनां शेषभक्षाधिकरणे दर्शितम् । तस्मादुदकेनैवाभिषेकः । तथाच गृह्यासंग्रहः ।

"सर्व्वयज्ञेषु विप्राणामद्भिः पूर्व्वं प्रवर्त्तते ।
तस्मात् सुरोत्तमा ह्यापो अद्भिरेवाभिषेचयेत्" ॥

इति । किं तूष्णीमभिषिञ्चेत् ? न । कथं तर्हि ? काम वेद ते नाम मदोनामासि—इत्येवमादिभिः ऋग्भिः । कतिभिः ऋग्भिः ? स्वाहाकारान्ताभिः । अस्मिन् प्रदेशे स्वाहाकारान्ता यावत्य ऋचः सन्ति तावतीभिः,—तिसृभिरित्यर्थः । तस्मादेकैकामृचमुच्चार्य्य एकैकोऽभिषेकः कर्त्तव्यः । उत्तराभ्यान्तु द्वाभ्याम् ऋग्भ्याम् उपस्थं योनिं स्नावयेत् । एतदुक्तं भवति । तिसृभिरेव ऋग्भिः तथा शिरस्यभिषेकः कर्त्तव्यो यथा सर्व्वं शरीरमभिषिक्तं भवति, परमुत्तराभ्यां

तथाऽभिषेक्तव्यं यथोपस्थो विशेषतः स्नावितो भवति—इति। अथेदानीं मन्त्रे विशेषमाह। समानयामुमित्यत्र अमुमित्यस्मिन् मन्त्रस्थाने समानयामुकमित्यभिषेक्तव्यायाः कन्यायाः भविष्यतः पत्युर्नाम गृह्णीयात् उच्चारयेत्। तदिदं सूत्रमतृज्य पाठक्रममनुसृत्यार्थक्रमं व्याख्यातम् ॥ १० ॥ ० ॥

## ज्ञातिकर्म्मैतत् ॥ ११ ॥

एतत् कन्यास्नपनं ज्ञातेर्मातापित्रोरन्यस्य कुलीनस्य सुहृदः कर्म्म। ज्ञातिकर्म्मत्वादेवेदं नातीवावश्यकमित्यवगम्यते। एवमेके। अयञ्चाभिषेको दौर्भाग्यालक्ष्म्युपसर्गाणां नोदनार्थं शाखान्तरेष्वपि पठ्यते, तस्मात् प्रयत्नतः कर्त्तव्यः। एवमन्ये। तदत्र भगवन्तो भूमिदेवाः प्रमाणम् ॥ ११ ॥ ० ॥

अथेदानीं पाणिग्रहणमभिधीयते,—

## पाणिग्रहणे पुरस्ताच्छालाया अग्निरुपसमाहितो भवति ॥ १२ ॥

पाणिग्रहणे कर्म्मणि प्रक्रान्ते पुरस्तादग्रतः शालायाः गृहस्य—चत्वर इत्यर्थः। अग्निरुपसमाहितः स्थापितो भवति, पूर्व्वोक्तामावृतं कृत्वा। अनुपदेशात् कर्त्तुरनियमः। तेन यावद्वरो वधूमादाय गृहान्निष्क्रम्यागच्छति, तावदन्य एव कश्चिदग्निं स्थापयति। आवृतमपि स एव करोति। अतएव सूचयिष्यति—"वर्हिषोऽन्तं कटान्तं प्रापयेत्"—इति।

यद्यप्याचार्य्येण कन्याप्रदानं प्रतिग्रहश्च न सूचितम्, तथापि "अलङ्कृत्य कन्यामुदकपूर्वां दद्यात्"—इत्येवमादिगृह्यान्तरदर्शनात् तदप्यादरणीयम्। पाणिग्रहणे शिष्यजिज्ञासा समुत्कटेति तन्निरसिसिषया क्रमप्राप्तानां पाणिग्रहणलिङ्गानां मन्त्राणां विनियोगविवक्षया वा खल्वाचार्य्यस्तदेव सूचयाञ्चकार, न कन्याप्रदानम्—इति श्लिष्यते। प्रदानञ्चेदं कन्यादातुः कर्म्म, न प्रतिग्रहीतुः। प्रतिग्रहोऽपि दानाधीन एव ॥ १० ॥ ० ॥

**अथ जन्यानामेको ध्रुवाणामपां कलसं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते ॥ १३ ॥**

अथानन्तरं स्थापितेऽग्नावित्यर्थः। जन्याः नवोढ़ाज्ञातयो वरस्निग्धा वा। तेषामेकोऽन्यतमः ध्रुवाणां सन्ततानां सम्यग्विस्तृतानाम्,—

"महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च।
गन्धवर्णरसैर्युक्ता ध्रुवास्ता इति निश्चयः" ॥

इति गृह्यासंग्रहोक्तलक्षणानाम्। अपां, ध्रुवाभिरद्भिरित्येतत्। कलसं कुम्भं पूरयित्वा वर्द्धयित्वा, सह उदकुम्भेन उदकपूरितेन कुम्भेन वर्त्तमानः—तमादायेत्यर्थः। प्रावृतो वस्त्रेणाच्छादितः। कृतोष्णीषः—इत्यन्ये। वस्तुतस्तु, प्रावृत इत्यनेन प्रावृतांसोऽभिप्रेयते। स खल्वयं गन्धमाल्यैरुदकुम्भमलङ्कृत्य धारयेत्। तथाच गृह्यासंग्रहः।

"गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः।

धारयेद्धिषु वर्णेषु प्रावृतांसो द्विजोत्तम" ॥

इति। 'वाग्यतोऽग्रेणाग्निं परिक्रम्य'—इति सूत्रभाष्यम्। दक्षिणतो दक्षिणस्यां दिश्यग्नेः ब्रह्माऽऽसनं परित्यज्य इत्यर्थो लभ्यते। उदङ्मुखः कौबेरीदिगभिमुखः अवतिष्ठते ऊर्द्ध्वस्तिष्ठति। अवपूर्वस्तिष्ठतिरनुपविष्टतां बोधयति। अत्रापि वाग्यमनलोपे पूर्वोक्तमेव प्रायश्चित्तं, कारणस्याविशेषात्—इति द्रष्टव्यम्। एवमन्यत्रापि ॥ १३ ॥ ० ॥

## प्राजनेनान्यः ॥ १४ ॥

प्राजनेन सह प्रतोदेन अन्यः कुम्भधारिणोऽपरः जन्यः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते ॥ १४ ॥ ० ॥

## शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्रान् सूर्पेणोपसादयन्ति पश्चादग्नेः ॥ १५ ॥

शमी प्रसिद्धा। तस्याः पलाशानि पत्राणि, तन्मिश्रान् लाजान्—

"अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते।
भृष्टास्तु व्रीहयो लाजा घटा स्वाण्डिक उच्यते" ॥

इत्युक्तलक्षणान्। चत्वारोऽञ्जलयः परिमाणमेषाम्—इति चतुरञ्जलिमात्रान्। परिमाणे मात्रट्। यावद्भिश्चत्वारोऽञ्जलयः पूर्य्यन्ते तावत—इत्येतत्। सूर्पेणोपसादयन्ति सूर्पस्थान् कृत्वा स्थापयन्ति पश्चादग्नेः। बहुवचनात् कर्त्तुरनियमः। चः समुच्चये पूर्वोक्तमेव समुच्चिनोति ॥ १५ ॥ ० ॥

**दृषदुपलञ्च ॥ १६ ॥**

दृषत् शिला पेषणाधारात्मिका, पुत्रश्चोपलः पेषणकरण-स्वरूपः। सा च स चेति द्वन्द्वैकवद्भावः तच्चोपसादयन्ति पश्चादग्नेः। कुतः पुनः पुत्र उपल इति वर्ण्यते? सन्निधानादित्याह। सन्निहितैव दृषज्जातिरागच्छति द्वयमिति सैव पुत्रस्यापि कल्पयितु-मुचिता। श्लोकमपि उदाहरन्ति।

"प्रसिद्धार्थस्य सान्निध्ये योऽप्रसिद्धार्थ उच्यते।
तत्सन्निधानसामर्थ्यात्तज्जातीयोऽवगम्यते" ॥

इति। दृषज्जातीयपुत्रस्यैवासादनं न तु दृषदः पुत्रस्य च—इति वा व्याख्येयम् ॥ १६ ॥ ० ॥

**अथ यस्याः पाणिं ग्रहीष्यन् भवति सशिरस्का साऽऽप्लुता भवति ॥ १७ ॥**

अथेति पूर्वोक्ताभिषेकानन्तरमिदानीमाप्लवनान्तरं दर्शयति। यस्याः कन्यायाः पाणिं ग्रहीष्यन् ग्रहीतुमिच्छन् भवति—ग्रहीष्यति वरः, सा कन्या सशिरस्का आप्लुता अविधवोपनीतमङ्गलोदकैः स्नाता भवति। अस्मिंश्चाप्लवने

"सवर्णाभिरनिन्द्याभिरद्भिरक्षतमिश्रितैः।
स्नानं चतुर्भिः कलसैः स्त्रीभिः स्त्रीं यत्र प्लावनम्" ॥

इति गृह्यासंग्रहोक्तो विशेषो प्रष्टव्यः ॥ १७ ॥ ० ॥

**अहतेन वसनेन पतिः परिदध्यात्,—या अकृन्त-न्नित्येतयर्चा, परिधत्त धत्त वाससेति च ॥ १८ ॥**

अहतेनाक्षुण्णेनाखण्डितेन यन्त्रनिर्मुक्तेन वसनेनेत्येतत्। आह-

तेन—इति केचित् पठन्ति। तदनाकरम्। वसनेन वाससा, पतिः यस्याः पाणिं गृह्णीष्यन् भवति तां परिदध्यात् अन्तर्भूतणिजर्थतया परिधापयेत् संयोजयेत्—अहतं वाससा परिधापयेदित्यर्थः। अत एव परिधत्स्व—इति, परिधत्त—इति च मन्त्रलिङ्गमनुगृह्यते। गृह्यान्तरे परिधापनोपदेशाच्चैवमवगन्तव्यम्। तच्चोदाहरिष्यामः। वरस्य परिधापनोपदेशादेव वध्वाः परिधानमप्याक्षिप्यते। तद्विना तदनुपपत्तेः। आचार्य्यस्याध्यापनविधिनेव माणवकस्याध्ययनमप्याक्षिप्यते—इति यद्वत्। या अकृन्तन्नित्येतया ऋचा, परिधत्त धत्त वाससा—इति मन्त्रेण च परिदध्यादिति गतेन सम्बन्धः। अथ एतया—इत्यवाच्यम्?—इति चेत्। न। स्वरवर्णनियमार्थत्वात्। कथं नाम? एतया एवम्भूतस्वरवर्णयैव न तु व्यत्यस्तस्वरवर्णयेत्यर्थः। तदनेन स्वरवर्णसम्पादनार्थमवश्यं यतितव्यम्—इति दर्शयति। तथा चोक्तम्।

"मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्"॥

इति। अत्र किञ्चिद्वक्तव्यमस्ति। द्वयी खल्वत्र परिधापनक्रियाऽवधार्य्यते। कस्मात्? भेदेनोपदेशात्। 'एतयर्चा'—इति, 'इति च',—इति चानयोर्मन्त्रयोर्भेदेनोपदेशो विभिन्नक्रियाविनियोगं मन्त्रयोरवगमयति। यदि पुनरेकस्यामेव परिधापनक्रियायामुभयोर्विनियोगोऽभिप्रेयेत, तद्व्यर्थं भेदोपदेशेन। तस्माद्वसनद्वयपरिधापने

मन्त्रद्वयस्य विनियोगः—इत्यादिमो मन्त्रोऽधरीयवसनपरिधापने, ऽन्तिमश्चोत्तरीयवसनपरिधापने करणम्—इति शिष्यते। गृह्यान्तरे चोपदेशात्। गृह्यान्तरे च वसनद्वयस्य—अधरीयस्य उत्तरीयस्य च परिधापनमुपदिश्यते—इतीहापि तथैव वर्णयितुमुचितम्। तथाच गृह्यान्तरम्। "अथैनां वासः परिधापयति"—इति। "अथोत्तरीयम्"—इति च।

"द्विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च।
एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः" ॥

इत्येकवाससोनग्नत्वस्मरणाच्चैतदवगन्तव्यम् ॥ १८ ॥ ० ॥

## प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेत्—सोमोऽददद्गन्धर्व्वायेति ॥ १९ ॥

प्रावृतां कृतोत्तरीयाम्। कथं प्रावृताम्? यज्ञोपवीतिनीं यज्ञोपवीतिनीमिव, यज्ञोपवीतवत् कृतोत्तरीयामित्यर्थः।

एवं वा—

प्रावृतां प्रकर्षेणावृताम् आच्छादिताम्,—"न नाभिं दर्शयेत् कुलवधूरागुल्फाभ्यां वासः परिदध्यात् न स्तनौ विवृतौ कुर्य्यात्"—इति स्मृत्युक्तरीत्या परिहितःधरीयवसनाम्—इत्येतत्। यज्ञोपवीतं यज्ञोपवीतवत् विन्यासविशिष्टमुत्तरीयं, तत् यस्या अस्ति, सेयं यज्ञोपवीतिनी, ताम्। यज्ञोपवीतवत् परिहितोत्तरीयवसनामित्यर्थः। तदाभ्यां पदाभ्यां पूर्व्वत्र सूचितयोर्वाससोर्विन्यासविशेषमिह

दर्शयति। यज्ञोपवीतपदश्चोत्तरीयेऽपि प्रयुज्यते विन्यासनिषेधाभार्थम्—इति पुरस्तादभिहितमस्माभिः।

यज्ञोपवीतवतीभिरेव कुतो न वर्ण्यते? तदभावादित्याह। न खल्वस्ति योषितां यज्ञोपवीतं, येनानूद्येत। अनुमीयतामिति चेत्। स्यान्मतम्, अस्मादेवानुवादात् योषितामपि यज्ञोपवीतमनुमीयताम्। न। अन्यथोपपत्तेः। अन्यथैवोपपन्नोऽयमनुवादो न विधिमनुमापयितुमलम्। अनन्यथासिद्धः खल्वनुवादो विधिमनुमापयति। सिद्धवदुपदेशाच्चासिद्धिः। सिद्धवत् खल्वेतदुपदिश्यते—यज्ञोपवीतिनीम्—इति। सिद्धं खल्वासां यज्ञोपवीतशब्दमुत्तरीयं न यज्ञोपवीतम्। तस्मादसिद्धिर्योषितां यज्ञोपवीतस्य।

तत्र ब्रूमः। यज्ञोपवीतिनीमित्यस्य यज्ञोपवीतवतीमित्ययमेवार्थः शब्दस्य श्रवणमात्रादवगम्यते। स खल्वयमर्थः श्रुत्याऽवगम्यते इति न युज्यते विना कारणमुत्स्रष्टुम्। यज्ञोपवीतवद्विन्यासविशिष्टे चोत्तरीये यज्ञोपवीतशब्दो गौणः। न चात्र लक्षणाकारणमस्ति। प्रमाणान्तरावगम्या हि सा न खल्वपि प्रमाणान्तराभावे सेद्धुमर्हति। न चात्र प्रमाणान्तरमस्ति। तथा चोक्तम्।

"गौणे सदपि सामर्थ्यं न प्रमाणान्तरं विना।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्॥
तात्पर्यञ्च स्वतो मुख्ये गौणार्थपरता पुनः।
प्रमाणान्तरविज्ञेया तदभावाच्च सिध्यति"॥

इति। योषितां यज्ञोपवीताभावादनुवादानुपपत्तिरिति चेत्। न। प्रावृतामित्यनुवादेन प्रावरणस्येव यज्ञोपवीतिनीमित्यनुवादेन

यज्ञोपवीतस्यापि विध्यनुमानोपपत्तेः। अग्रिमेऽपि सूत्रे अनुवादाद्विधेरनुमाने न विवादः। अन्यथोपपत्तेरिति चेत्। इति चेत् भवान् पश्यति, अन्यथाऽपि उत्तरीये गौणतयाऽप्युपपद्यमानोऽयमनुवादो न विधिमनुमापयितुमर्हतीति। तन्न; गौणतायाः प्रमाणाभावेनासम्भवात्,—इत्युक्तमादावेव। एतेन सिद्धवदुपदेशोऽपि व्याख्यातः। अपिच पुराकल्पे किल पुंसामिव योषितामपि यज्ञोपवीतमासीत्। तदाह यमः।

"पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनं च वेदानां सावित्रीवचनं तथा॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत् परः।
स्वगृहे चैव कन्याया भैक्षचर्य्या विधीयते॥
वर्ज्जयेदजिनं चीरं जटाधारणमेवच"।

इति। तथा हारीतः। "द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च"—इति। तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्य्या इति। वधूनां तूपस्थिते विवाहे कथञ्चिदुपनयनमात्रं कृत्वा विवाहः कर्त्तव्य इति माधवाचार्य्याः। तस्मात्, यज्ञोपवीतिनीमित्यस्य यज्ञोपवीतवतीमिति यथाश्रुत एवार्थ आदरणीयः।

तामिमां प्रावृतां यज्ञोपवीतिनीं वधूं अभ्युदानयन्—"पिता प्रत्तामादाय गृहीत्वा निष्क्रामयति"—इति गृह्यान्तरदर्शनात् करेण करे गृहीत्वा गृहादग्नेरभिमुखीमानयन् जपेत् पतिः—सोमोददद्दित्येतं मन्त्रम्॥ १९॥ ०॥

**पश्चादग्नेः संवेष्टितं कटमेवंजातीयं वाऽन्यत् पदा प्रवर्त्तयन्तीं वाचयेत्—प्र मे पतियानः पन्थाः कल्पता-मिति ॥ २० ॥**

पश्चादग्नेरित्युक्तार्थम् । संवेष्टितं सम्यग्वेष्टितमधस्तोपरि च पार्श्वे चाच्छादितमहतेन वसनेनेत्यर्थः । कटं, कटः प्रसिद्धः वीरणपर्णैर्ग्रथ्यते । तस्य खल्वसम्भवे एवंजातीयं तृणजातीयम् अन्यद्वा किञ्चित् तृणवेष्टकादि. पदा चरणेन प्रवर्त्तयन्तीं प्रसारयन्तीम्— अग्निसमीपं नयन्तीं वधूं वाचयेत् भाषयेत् पतिः । किं वाचयेत्? प्र मे पतियानः—इत्येतं मन्त्रम् । गतमन्यत् । अत्रानुवादाद्विधि-रनुमीयते,—वरवध्वोरुपवेशनार्थं कटः कर्त्तव्यः इति । कर्त्तुश्चा-नियमः । एतदुक्तं भवति, वरेण नीयमाना वधूः चरणेन कटं प्रसार्य्याग्निसमीपं नयत्युपवेशनार्थम्, मन्त्रञ्च तत्कालमेव पठति— इति । अत्र विशेषमाह गृह्यासंग्रहः ।

> “यदा निष्क्रामयेत् कन्यां वरः पाणिं जिघृक्षयन् ।
> अग्निं प्रदक्षिणं कृत्वा कटस्तीर्णं पदं नयेत् ।
> पदा प्रपद्य पन्थानं पतियानं जपेद्वधूः ।
> वरो वाऽत्र जपेन्मन्त्रमा कटान्तादिति स्थितिः” ।

इति ॥ २० ॥ ० ॥

**स्वयं जपेदजपन्त्यां प्रास्यादिति ॥ २१ ॥**

लज्जया अन्येन वा केनचित् कारणेन तं मन्त्रमजपन्त्यां वध्वां पतिः स्वयमेव जपेत् । तत्र च, प्र मे—इत्येतस्मिन् मन्त्रस्थाने प्रास्या-दित्येष विशेषः कार्य्यः ॥ २१ ॥ ० ॥

पदा प्रवर्त्तयन्तीमित्यर्थः। तत् कियन्तं प्रवर्त्तयेत् ? उच्यते,—

## बर्हिषोऽन्तं कटान्तं प्रापयेत् ॥ २२ ॥

बर्हिषः—इति जात्याश्रयमेकवचनम्। बर्हिषाम् आस्तृतानामन्तं कटस्यान्तं प्रापयेत्। अयमर्थः। कटस्तथा पदा प्रवर्त्तयितव्यो बध्वा, यथा तदन्तभाग आस्तृतबर्हिषां किञ्चिदुपरि स्यादिति। तस्मादवगच्छामः,—यावद्वासः परिधाप्य वरो बधूमादायागच्छति, तावद्बर्हिरास्तरणादिका सर्व्वाऽप्यावृदन्येनैव कर्त्तव्या—इति।

रघुनन्दनस्त्वाह—"अन्तशब्दौ समीपवचनौ, आस्तृतबर्हिषां कटस्य च समीपं देशं—कटबर्हिषोरन्तरालरूपं बधूं प्रापयेत् पतिः"—इति। तदसङ्गतम्। उपात्तं कर्म्मद्वयमुत्सृज्यानुषङ्गेन बध्वाः कर्म्मत्वकल्पनाऽनौचित्यात्। नाप्यन्तरालदेशं गतया बध्वा किञ्चित् प्रयोजनमस्ति। उपविष्टया खल्वेतया प्रयोजनम्। "प्रापयेत्"—इत्यत्र "प्रेरयेत्"—इति केचित् पठन्ति। तदापि तथैवार्थः ॥ २२ ॥ ० ॥

एवं वरगृहीतकरा बधूरागत्य,—

## पूर्व्वे कटान्ते दक्षिणतः पाणिग्राहस्योपविशति ॥ २३ ॥

पूर्वे कटान्ते कटस्य पूर्वस्मिन् भागे दक्षिणतोदक्षिणस्यां दिशि उपविशति। कस्य दक्षिणतः ? पाणिग्राहस्य। यः पाणिमस्या ग्रहीष्यति, तस्य ॥ २३ ॥ ० ॥

## दक्षिणेन पाणिना दक्षिणमंसमन्वारब्धायाः षड़ाज्याहुतीर्जुहोत्यग्निरेतु प्रथम इत्येतत्प्रभृतिभिः ॥ २४ ॥

दक्षिणेन सव्येतरेण। वामाचारा योषितः—इति ख्यापयते।

भट्टनारायणाद्यनुमतं समीचीनमवोचाम। समिदाधानस्य प्रधान-कर्म्मान्तरतयोपनयनकर्म्मानङ्गत्वात् अहःशेषस्थितेस्तादर्थ्याच्च ॥ ० ॥ ५० ॥ ० ॥

इयमपरा सूत्रद्वययोजना,—

## यथार्थम् ॥ ५१ ॥

प्रकृतस्य सावित्रचरोरवसाने यथार्थं यथाप्रयोजनं यथाप्राप्त-मित्येतत्। किमनेनोक्तं भवति? एतदनेनोक्तं भवति। उपनयन-व्रतान्ते सावित्रहोमं कृत्वा, अग्ने व्रतपते—इत्यादिमन्त्रैः सूत्रयि-ष्यमाणविशेषैराज्येन व्रतसमापकहोमञ्च कृत्वा, तन्त्रं समापयेत्—इति। स खल्वयमाज्यहोमः सर्व्वेष्वेव व्रतान्तेषु स्यादिति वक्ष्यामः॥ ० ॥ ५१ ॥ ०॥

## गौर्दक्षिणा ॥ ५२ ॥

इयं दक्षिणाऽप्युपनयनव्रतस्यैव। एतदपि परस्तादुपपादयि-ष्यामः। अस्यामपि वर्णनायामुपनयनकर्म्मणः प्राचीनैव परिसमाप्तिः, दक्षिणा च गौरेव स्यात्, पूर्वोक्तकारणात्—इति न कश्चिद्विरोधः। परन्तु सावित्रचरोः कर्म्मक्रमस्यासूत्रणात् यथार्थमित्यस्य कर्म्मापवर्ग-परत्वावगतेश्च पूर्व्वैव योजना समीचीनेति प्रतिपद्यामहे। अतिक्रान्त-संबन्धश्चाचार्य्यस्यानुमत इत्यावेदितमधस्तात् ॥ ० ॥ ५२ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मज-श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये द्वितीयप्रपाठकस्य दशमी खण्डिका ॥ ० ॥

॥ समाप्तश्चायं द्वितीयः प्रपाठकः ॥

